# संगमनी

संस्कृत [illegible]



卐

संस्कृत-साहित्य-परिषद्
दारागंज-प्रयागः

•

## प्रवेशाङ्कः

# संगमनी

## [ संस्कृतत्रैमासिकी ]

सम्पादकः
प्रभात शास्त्री

●

सहसम्पादकौ

तारिणीश झाः
व्याकरणवेदान्ताचार्यः

जयशङ्कर त्रिपाठी
साहित्याचार्यः, एम्० ए०

●

प्रयागस्थ—
संस्कृतसाहित्यपरिषदः
प्रकाशनम्

●

कार्यालयः
'संगमनी'
दारागंज, प्रयागः

●

वार्षिकं मूल्यम्
५.०० रु०
प्रत्यङ्कम्
१.५० रु०

प्रवेशाङ्कः

●

वसन्तपञ्चमी
संवत् २०२१ विक्रमाब्दः

●

अहं राष्ट्री संगमनी वसूनां
चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा
भूरिस्थात्रां भूर्यावेशयन्तीम् ॥
—ऋग्वेदे, १०।१२५।३

●

# शुभाशंसा:

डा० रामकरण शर्मा (संस्कृत) विशेषाधिकारी
शिक्षामन्त्रालयः, नयी दिल्ली।

महानेष विषयो हर्षस्य यदत्रभवन्तः 'संगमनीम्' प्रकाशयितुमुद्युक्ताः। सर्वे वयं संगमनीं प्रेरणां कामपि भूयस्तमां दिदृक्षामहे। नूनमेव पुरस्करिष्यति तां प्रेरणां भवदीया 'संगमनी' त्याशास्महे।

●

श्री रामनरेश मिश्रः प्रस्तोता, वाराणसेयसंस्कृतविश्वविद्यालयः

भवद्भिः प्रकाश्यमाना 'संगमनी' संस्कृतपत्रिका संस्कृतवाङ्मयस्याभ्युदयाय संस्कृतसमाजेऽनुसन्धानप्रवृत्तेः प्रोत्साहनाय सुरभारतीसमुपासकानां च भाषा-परिष्कारेण सह सद्भावनायाः ज्ञानराशेश्च विकासाय उपकारिणी भवेदिति कामये।

●

डा० बाबूराम सक्सेना रविशङ्कर युनिवर्सिटी, रायपुर

आपका दिनांक ११ अक्तूबर १९६४ का पत्र उपकुलपति जी को प्राप्त हुआ। वह जानकर उनको हर्ष हुआ कि आप संगमनी पत्रिका निकाल रहे हैं।

आपकी पत्रिका के उज्ज्वल भविष्य की वह कामना करते हैं।

भवदीय
हरप्रकाश
उपकुलपति के सचिव

# माङ्गलिकम्

गजवरवदनविभूषित ! मदरूषित ! ए !
मधुकरगायकगीत ! सुखय गणाधिपते !

चन्दनमृगमदचर्चित ! कुसुमार्चित ! ए !
सिन्दूरारुणभाल ! सुखय गणाधिपते !

मुखमोदक ! धृतमोदक ! मतिशोधक ! ए !
विघ्नवनानलरूप ! सुखय गणाधिपते !

एकदन्तरिपुखण्डन ! कृतमण्डन ! ए !
पुष्करपुष्करमाल ! सुखय गणाधिपते !

भृतकङ्कणमणिनूपुर ! सुखगोपुर ! ए !
अघपर्वतशतवज्र ! सुखय गणाधिपते !

शिखिवाहनलघुसोदर ! लम्बोदर ! ए !
गौरीनन्दन ! देव ! सुखय गणाधिपते !

मूषकवाहनमण्डित ! रणपण्डित ! ए !
खण्डितदानवमान ! सुखय गणाधिपते !

रामकवीज्यपदाम्बुज ! साङ्गदभुज ! ए !
कविकुलकाव्यनिदान ! सुखय गणाधिपते !

—अप्रकाशित 'गीतगिरीश' काव्यात्

## राष्ट्रोन्नयनाय

# श्री शङ्कराचार्याणाम् सन्देशः

"एतद्देशप्रसूतस्य" इत्यादिमानववचनानुसारं यदि सर्वाधिकां समुन्नतिमपेक्षध्वे तर्हि सद्य एव सङ्घटध्वं सर्वप्रयत्नेनापि। विचारयध्वं वैदिकधर्माणां परिस्थितिम्। अनुचिन्तयध्वं तदुन्नयनोपायान्। परिशीलयध्वं गीर्वाणवाणीम्। पर्यवेक्षध्वं भारतीयतायाः गरिमाणम्। प्रचारयध्वं सत्सम्प्रदायान्। प्रबोधयध्वं साधुजनान्। संदर्शयध्वं सर्वमतसामरस्यम्। वशीकुरुध्वं साधुमार्गम्। दूरीकुरुध्वं परमतविद्वेषम्। उपेक्षध्वं पाश्चात्यानुकरणदासताम्। अपेक्षध्वं धार्मिकस्वाराज्यम्। प्रार्थयध्वं परमेश्वरम्। आश्रयध्वं पुरुषकारम्। प्रतीक्षध्वं च भाविनो मङ्गलान् दिवसान्। अथवा किं बहुना—"संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्" इति।

डा० रामशङ्कर भट्टाचार्यः

# बौधायनधर्मसूत्रभाष्य-पाठ-विमर्शः

धर्मसूत्रे पठ्यते—"दैन्यं शाठ्यं जैह्म्यं च वर्जयेत्" इति (२।२।७८)। दैन्यपदं व्याचचक्षे गोविन्दस्वामी—"आत्मनः क्षीणत्वप्रदर्शनेन वा विष्णुना दैन्यम्" इति। अत्र 'वा विष्णुना' इत्यंशः अर्थहीन एव प्रतिभाति। अस्य पाठान्तरादिकमपि नोपलभ्यते, येन शुद्धपाठस्योहनं सुशकं स्यादिति।

अस्मन्मते 'वा विष्णुना' इत्यत्र 'याचिष्णुता' इति पठनीयम्। लिपिकर-प्रमादादेव याचिष्णुतेतिशब्दः वाविष्णुनेति रूपेण लिखितः। दैन्यविवरणे याचिष्णुता पदोल्लेखः सर्वथोपपद्यते।

पाणिनीयतन्त्रानुसारतः इष्णुच्-प्रत्ययः याच्धातोर्न भवतीति शङ्का निःसारा[1], इतिहासपुराणधर्मशास्त्रेषु पदस्यास्य बहुशो दर्शनात्। तथा च मनुः (तामसगुणप्रसंगे) आह—"याचिष्णुता प्रमादश्च तामसं गुणलक्षणम्" इति (१२।३३)। तामसं खलु याच्ञामूलं दैन्यमिति दार्शनिकवाङ्मये प्रसिद्धम्।

---

१. केचित् 'भुवश्च' इत्यत्र चकारबलात् क्षयिष्णुयाचिष्णु-इत्यादि-प्रयोगाणां साधुत्वमाहुः। भाष्यानारूढोऽयं पन्था इति दीक्षितः।।

# हिमालयकविः कालिदासः

दिवङ्गतः श्री केदारनाथशर्मा सारस्वतः
( सुप्रभातसम्पादकः )

आर्याणां प्रथममुत्पत्तिस्थानम्, आर्यसभ्यतायाः प्रधाना प्रादुर्भावभूमिः, आर्यवाङ्मयस्य प्रथमं स्रोतः, आर्यमहर्षीणां सर्वोत्कृष्टा तपोभूमिः, अनन्तरत्नानामाकरः, भारत-वसुन्धरायाः दुर्गमो दुर्गः भारतवर्षस्य अमल-धवलं शुचि-समुन्नतं कमनीयं किरीटम्, सिन्धु-ब्रह्मपुत्र-नदानां गङ्गा-यमुना-सरस्वती-सरयू-वितस्ता-विपाशा-प्रभृति-पुण्यतम-नदीनां प्रभवः, भूस्वर्गायमाण-कश्मीर-कुलूत-नेपाल-कामरूपादिदेशैरलङ्कृतः, अमरनाथ-बदरीनाथ-केदारनाथ-पशुपतिनाथ-प्रभृतिदिव्यदेवैः सुशोभितः, शारदा-वैष्णवी-कामाख्यादिपीठैर्मण्डितः, गौरीशङ्कर-कैलाश-नन्दादेवीप्रभृतिभिरभ्रंलिहैरगम्यैः शिखरैरुपशोभितः हिमालयो नाम नगाधिराजः, यथा सर्वासां वेदराशीनाम् तन्त्राणां शास्त्राणां दर्शनानाञ्च जन्मभूमिस्तथैव काव्यानामपि जन्मभूमिरिति, नास्त्यत्र सन्देहलेशोऽपि ।

अस्यैव कैलाश-शिखरे शिव-पार्वती-संवादरूपाणां शतशस्तन्त्राणां सृष्टिरभूत् । अत्रैव च मनु-वशिष्ठ-गौतम-प्रभृतिभिर्महर्षिभिरार्यजातेः गौरवाणां धर्मशास्त्राणां दर्शन-शास्त्राणां पुराणादीनां च प्रणयनमकारि ।

आयुर्विज्ञानविदां महर्षीणां महती परिषत् प्रबभूव। यतश्च भारतीयायुर्वेदशास्त्रस्य समुत्पत्तिरभूत्।

अस्यैव हिमालयस्यैकदेशो महर्षेः काश्यपस्य तपोभूमिः शारदापीठाधिष्ठितः कश्मीरदेशः; यः खलु प्रकृतेर्विलासभूमितया वर्णनातीत-सौन्दर्यशालितया च 'भू-स्वर्ग'—इति प्रथितः। अत्रैव शैवागम—प्रत्यभिज्ञाशास्त्र-प्रणेतारः सोमानन्दनाथादयो महादार्शनिकाः, भामह-आनन्दवर्द्धन-अभिनवगुप्त-मम्मट-प्रभृतयो ध्वनिमार्ग-प्रतिष्ठापनाचार्याः, बिल्हण-कल्हण-जल्हण-रत्नाकर-मङ्ख-शम्भु-आनन्द-जगद्धरभट्ट-प्रभृतयो महाकवयः प्रादुरभूवन्। ये हि खलु सुरभारतीं संस्कृतसाहितीञ्च परां कोटिमासादयाञ्चक्रुः।

अस्माकं विश्वमहाकविः कविकुलगुरुः कालिदासोऽपि अस्यैव हिमालयस्य दानमित्यपि सुदृढं वक्तुं सुशकम्।

यथा कालिदासस्य समय-विषये बहुभिर्युक्तिकुशलैः पुरातत्त्वान्वेषणशीलैः बहुधा सन्देहः समुत्पादितः, तथैव कवेरस्य जन्मभूमिविषयेऽपि महान् मतभेदः समालोक्यते। केचन बंगभूमिं, केचन कान्यकुब्जदेशम्, केचन कश्मीरदेशं कवेर्जन्मभुवं मन्यन्ते। परमयं विषयस्तु तद्ग्रन्थानां सूक्ष्मदृशा समालोचनेनैव सुनिर्णेतुं शक्यः। नात्र गवेषकाणाममूलास्तर्काः युक्तयो वा समपेक्षिताः। तदत्र पाठकानां मनोविनोदाय किञ्चिदपि मीमांस्यते।

कालिदासग्रन्थानामालोचनेन स्पष्टतरमेव प्रतीयते यत् कालिदासग्रन्थेषु हिमालयस्यैव सर्वतोऽधिकं प्राधान्यं दरीदृश्यते। विविध-शृङ्ग-स्थान-नदी-वृक्ष-ओषध-मृगादिभिरुपशोभिते, पूर्वापरौ तोयनिधी वगाह्य स्थिते विस्तृततरे हिमालये, शिखरेषु कैलाशः, नदीषु गङ्गा, वृक्षेषु देवदारवः, ओषधीषु रात्रिज्वलनशीलाः; मृगेषु चमर्यः, प्राणिषु च किन्नराः यक्षाश्चेति सविशेषं प्रियतराः सन्ति कवेः। हिमालयस्य कश्मीरभागे नैतेषां प्रधानता। नापि नेपाल-प्रान्ते, कुलूतप्रान्ते, कामरूपे वा। इयं व्यवस्था तु [illegible] गढ़वाल-प्रान्ते, अल्मोड़ा-मण्डले वा

कालिदास-वर्णित-वस्तूनां यथोपलब्धिर्जायते, न तथान्यत्र हिमालय-भागे।

मेघदूते कविः कनखलतो कैलाशमार्गमेवादिशति मेघाय। यथा—

'गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलाशस्य त्रिदश-वनिता-दर्पणस्यातिथिः स्याः॥'

एवं रघुवंशेऽपि प्रायस्तत एव रघुसेनामारोहयति हिमालयम्—

"ततो गौरी-गुरुं शैलमारुरोहाश्वसाधनः।"

"भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः।
गङ्गा-शीकरिणो मार्गे मरुतस्तं सिषेविरे॥"

रघुवंशे दिलीप-परीक्षावसरेऽपि कविर्हिमालयं गङ्गां च न विस्मरति—

"अन्येद्युरात्मानुचरस्य भावं
जिज्ञासमाना मुनि-होम-धेनुः।
गङ्गा-प्रपातान्त-विरूढशष्पं
गौरीगुरोर्गह्वरमाविवेश।"

मेघदूतेऽपि अलकावर्णन-प्रसङ्गे—

"तस्योत्सङ्गे प्रणयिन इव स्रस्त-गङ्गा-दुकूलाम्"

शताधिकासु सत्स्वपि हिमवत्प्रभवासु निम्नगासु गङ्गामन्तरा नान्यां स्मरति कविः।

अस्मिन्नेव प्रान्ते देवदारूणामपि विद्यते महत्प्राचुर्यम्। एवं तु हिमालयस्य सर्वत्रैवोन्नतभागेषु देवदारवः प्राचुर्येण सन्ति, परं यथा अल्मोड़ा-गढ़वालयोर्विद्यते भूयस्त्वं न तथाऽन्यत्र। देवदारुप्रियोऽयं महाकविः कुमारसम्भवे शिवतपोवने महति देवदारु-तले शिवस्थानं वर्णयति।

यथा—

"स देवदारु-द्रुम-वेदिकायाम्
शार्दूलचर्म-व्यवधानवत्याम्।"

एवमेव रघुवंशेऽपि सत्स्वपि महावृक्षेषु रघुराजानां देवदारुद्रुमेष्वेव बन्धनं वर्णयति—

"तस्योत्सृष्ट-निवासेषु कण्ठ-रज्जुक्षतत्वचः।
गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः॥"

देवदारुषु सर्वतोऽधिकं निरतिशयं प्रेमाणं मेघदूतेऽभिव्यनक्ति कविः—

"भित्त्वा सद्यः किसलय-पुटान् देवदारु-द्रुमाणां
ये तत्क्षीर-स्रुति-सुरभयो दक्षिणेन प्रवृत्ताः।
आलिङ्ग्यन्ते गुणवति! मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति॥"

कुमारसम्भवे हिमालयवर्णने गङ्गा-देवदारु-वायुमेव वर्णयति—

"भागीरथी-निर्झर-शीकराणां
वोढा मुहुः कम्पितदेवदारुः।
यद् वायुरन्विष्टमृगैः किरातै-
रासेव्यते भिन्न-शिखण्डिबर्हः।"

तत्रैव पुनरपि—

"कपोल-कण्डूः करिभिर्विनेतुं
विघट्टितानां सरलद्रुमाणाम्।
यत्र स्रुत-क्षीरतया प्रसूतः
सानूनि गन्धः सुरभीकरोति।"

रघुवंशेऽपि—

"अमुं पुरः पश्यसि देवदारुं
पुत्रीकृतोऽसौ वृषभध्वजेन।
यो हेमकुम्भ-स्तन-निःसृतानां
स्कन्दस्य मातुः पयसां रसज्ञः।"

अत्र तु कविना देवदारुषु निरतिशया भक्तिर्व्यक्तीकृता।

अल्मोड़ा-मण्डले वागेश्वर-नामकं सुप्रसिद्धं शिवस्थानं वर्तते। यत्र केवल-मभ्रंलिहा देवदारव एव सन्ति। तत्रैव शिवतपोवनमासीदिति प्राचीना प्रसिद्धिः। तच्च स्थानं गङ्गोत्तरीमार्गे, कैलाश-गमन-मार्गे विद्यते। तत्पार्श्वे च कोशीनदी प्रवहति, या हिमवत्प्रभवाऽपि नातिप्रसिद्धा। कालिदासेन च सा कोशी सविशेषं समुपवर्णिता।

यदा च शङ्करः पार्वतीं परिणेतुकामो हिमालयपार्श्वे सप्तर्षीनप्रैषयत् तदा तस्या एव कोशी-नद्याः प्रपातस्य कविः वर्णनं करोति। यथा—

"महाकोशी-प्रपातेऽस्मिन् सङ्गमः पुनरेव नः।"

एतेन प्रतीयते यत् कोशी-प्रपात-सविधे शिवस्याश्रमपदमासीत्। अत्र 'अस्मिन्' इति इदमः प्रयोगश्च प्रत्यक्ष-दृश्यमानं प्रपातं बोधयति। अप्रसिद्धेऽस्मिन् कोशीप्रपाते महान् स्नेहः पक्षपातश्च कवेः स्फुटं प्रतीयते।

एवमेव मेघदूते महाकविः हरद्वारादेव कैलाशमार्गे मेघं प्रेषयन् हिमालयं किमपि विशेषतो वर्णयति। तत्र च अप्रसिद्धमपि किमपि शम्भोश्चरणन्यासं परया भक्त्या कथयति कविः—

"तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत् सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः।
यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
सङ्कल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः॥"

पर्वतस्य मेखलाभागस्थ-वनप्रदेशेषु ग्रीष्मकाले प्रायो दवाग्निप्रकोपो भवति। स च दवाग्निर्वर्षाकाल एव शाम्यति। हिमाद्रेरूर्ध्वप्रदेशेषु जलवृष्टिर्न भवति, तत्र करकापात एव भवतीति प्राकृतो नियमः, तदपि वर्णनं कविना सूक्ष्मदृशा विहितम्—

"ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मिन्
मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम्।

तान् कुर्वीथास्तुमुल-करका-वृष्टिपातावकीर्णान्
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥"

हिमालयस्यापत्यकासु कृतवसतीनां शरभाणां वर्णनं तेषाञ्च करकावृष्ट्या शमनं प्रत्यक्षानुभवगम्यमेव। ततोऽप्यग्रे कविः सर्वेषामविदितं कैलासमार्गस्थं क्रौञ्चरन्ध्रं वर्णयति—

"प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्
हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम्।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभि
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥"

एवमेव कवेर्हिमालयप्रेमा सर्वत्र काव्येषु जाजागरीति। कालिदासस्य सर्वप्रथमा रचना कुमारसम्भवमेव, तच्च सर्वथा हिमालयस्यैव वर्णनपरम्।

अपरञ्च, मेघदूतं काव्यमपि हिमालयशिखर एव समाप्यते कविना। मन्यामहे येन मार्गेण कविर्हिमालयप्रदेशात् मालवदेशमाजगाम, स एव मार्गः कविना मेघदूते वर्णितः। तत्र च हिमालयवर्णनमेव प्राधान्येनोपलभ्यते। कविः प्रायः किन्नर-यक्ष-विद्याधरादीनामेव वर्णनं बाहुल्येन कृतवान्। तेषां निवासस्थानं हिमालय एव।

रघुवंशेऽपि कविर्हिमालयं न विस्मरति। रघुदिग्विजय-प्रसङ्गे हिमालयवर्णनं कुर्वता कविना तत्रत्य-उत्सवसङ्केतनाम-योद्धृजातेर्वर्णनं कृतम्। एतेनैतत् प्रतीयते यत् कालिदासकाले हिमालय-प्रदेशेषु राजान आसन्, नगराणां निर्माणमप्यभूत्। तत्र योद्धार अप्यासन्। एतत्सर्वं सुविस्तृतं वर्णनं न केवलं कल्पनाधारेण कर्तुं शक्यम्। उत्सवसङ्केतनामानः केचन पर्वतीया योद्धारः प्रसिद्धा आसन्। यथा—

"शरैरुत्सवसङ्केतान् स कृत्वा विरतोत्सवान्।
जयोदाहरणं बाह्वोर्गापयामास किन्नरान् ॥"

क इमे उत्सव-सङ्केता इति न सम्यक् वक्तुं प्रभूयते। कदाचिदिमे गढवालीयाः नेपालीया वा योद्धारो भवेयुः।

इत्येवं प्रचुरैः प्रमाणैरिदं सद्धेतुकानुमानं कर्तुं युज्यते यदयं कविकुलगुरुः—हिमालय-प्रदेशीयस्तत्रापि च गढवाल-अल्मोड़ा-मण्डलवर्ती-इति नात्र विप्रतिपत्तिः।

अत एव चायं कविः—मालवराजधान्यामुज्जयिन्यां वा चन्द्रगुप्त-विक्रमादित्य-सभायां पाटलिपुत्रे वा सम्मानमलभदिति वक्तुं शक्यते।

कश्मीर-देशवासी महाकविर्बिल्हणः कल्याणपुरे (बम्बई सविधे) चालुक्य-विक्रमादित्य-सभायामासीदिति स स्वीये विक्रमाङ्कदेवचरितकाव्ये प्रथमं स्वदेशं काश्मीरमेव स्मरति। एवमेव हिमालयीयोऽयं कालिदासो मालव-राजधानीमधिवसन्नपि प्रथमं हिमालयमेव जन्मभुवं स्मरति।

अन्यच्च पर्वतीयाः प्रायः शिवभक्ताः, शक्तिभक्ताश्च भवन्ति। तदयं महाकविरपि शिवाशिवयोः परमभक्त आसीदिति तु सुव्यक्तमेव। रघुवंश-प्रारम्भे मङ्गलाचरणश्लोक एवार्धनारीश्वरौ वर्णयति—

"वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वती-परमेश्वरौ॥"

एवं शकुन्तला-विक्रमोर्वश्यादि-नान्दीपाठे शिवस्मरणमेव करोति कविः। कुमारसम्भवस्तु शिव-शक्त्योर्विवाहपर एव। मेघदूतेऽपि महाकाल-हिमालय-कैलाशस्थ-शिववर्णनमेव प्राधान्येन समालोक्यते।

इत्येवं कवेः काव्यालोचनेन हिमालयप्रभवत्वमस्य निर्विचिकित्समेवेत्यलम्।

श्री लक्ष्मणनारायण शुक्लः

# प्राचीनभारते चौर्यशास्त्रम्

कलाया उद्देश्यं कलामात्रं मनोविनोदो वा नास्ति, अपित्वात्मनः परमतत्त्वं प्रत्युन्मुखीकरणमेव विद्यते। भारतेऽयमादर्शः सदैव सिद्धान्तरूपेण स्वीकृतः।

"विश्रान्तिर्योऽस्य सम्भोगे सा कला न कला मता।

लीयते परमानन्दे ययात्मा सा परा कला॥" इत्यादि-शास्त्रवचनैः कृतिमतां सहृदयानां चैतत्सिद्धान्तः परिपुष्टः। एतदर्थमेव भारतीय-मनीषिभिः कलाया द्वावपि (ललितकला उपयोगिनी चेति) भेदौ न विनोद-साधनरूपेण, अपितु चतुर्विधपुरुषार्थानां मध्ये सन्मार्गगम्यमोक्षप्राप्त्यै कारण-रूपेण स्वीकृतौ।

नास्ति विकल्पोऽत्र यज्जनानां प्राकृतिकदौर्बल्यात् गुणैः सह दोषा अपि समाजे प्रादुर्भवन्ति। अतएव सामाजिकानां सदसद्विवेकपूर्वकं सत्कर्मसु प्रवृत्तिः असत्कर्मभ्यः निवृत्तिश्चापेक्ष्येते चतुर्विधपुरुषार्थलाभाय। तथा च कलायां देशकाल-पात्रविशेषेषु दोषाविर्भावः कथं केनोपायेन चैतेभ्यः परिरक्षणं सम्भवतीति समाज-शास्त्रिभिः लेखकैः कलामीमांसकैश्चावश्यमेव चिन्तनीयम्। अध्यात्मराजनीति-

दर्शनव्याकरणसंगीतशास्त्रादिभिः सह समाजनिन्दितचौर्यकलाया अपि शास्त्रकारैः कृतस्य सम्यग्वर्णनस्येदमेव कारणम् ।

सामान्यरूपेण चौर्यशब्दात् नीतिविरुद्धं गोपनं, यशोऽपहं कार्यं, प्रत्यक्षं परित्यज्य पलायनं चेत्यादयोऽर्थाः गृह्यन्ते । कोशकारास्तु चोरः, ऐकागारिकः ( एकम् असहायम् आगारं प्रयोजनमस्य ), स्तेनः, दस्युः ( दस्यति = परस्वामाशयति ), तस्करः, मोषकः, खनकः, शङ्कितवर्णः, तृपुः, तक्का, रिक्का, ताक्षुः, वनर्गुः, क्षुरभित्, प्रतिरोधी ( प्रतिरोधः तिरस्कारः अस्ति अस्य ), परास्कन्दी ( परानास्कन्दितुं शीलमस्य ), पाटच्चरः ( पाटयन् छिन्दन् चरति ), मलिम्लुक् ( मली सन् म्लोचति गच्छति), परिपन्थी, साहसिकः, इत्यादयः शब्दाः चोरस्यार्थे प्रयुक्ताः, चौर्यवैविध्यादेतेषामर्था अपि स्पष्टा एव भवन्ति ।

वैदिकसाहित्येऽपि तस्करादिशब्दाः[1] तद्विषयककार्याणि च वर्णितानि ।

---

१. ऋग्वेदे (क) एत उ त्ये प्रत्यदृश्रन् प्रदोषतस्करा इव १-१९१-५
,, (ख) स्तेनं राय सारमेयतस्करं वा पुनः सर ७-५५-३
,, (ग) यथ एक पीपाय तस्करो यथाँ एष वेदनिधीनाम् ८-२९-६
अथर्व० (घ) परेणैतु पथा वृकः परमेणोत् तस्करः ४-३-२ ।
,, (ङ) माश्वानो भद्रे तस्करो मा नृणां यातुधान्यः १९।४७।६।
,, (च) परमेभिः पथिभिः स्तेनो धावतु तस्करः १९।४७।७
,, (छ) अपस्तेनं वासो गो अजमुत तस्करम् १९।५०।५
यजुः० (ज) ये स्तेना ये च तस्करास्तांस्तेऽग्नेऽपि दधाम्यास्ये, ११-७७
(झ) दंष्ट्राभ्यां मलिम्लुञ्च जम्भ्यैस्तस्कराँऽ उत । ११-७८
हनुभ्यांस्तेनान् भगवस्ताँस्त्व खाद सुखादितान् ॥
(ञ) ये जनेषु मलिम्लवः स्तेनासस्तस्करा वने ११।७९
वाजसने—(ट) असुन्वतमयजमानमिच्छस्तेन स्येत्यामन्विहि तस्करस्य १२।६२
(ठ) नमो वंचते परिवंचते स्तायूनां पतये नमो, नमो निषंगिण इषुधिमते तस्कराणां पतये नमो नमः । १६।२१

यद्यपि चौरशब्दस्तु[२] तैत्तिरीयारण्यके एव किन्तु तदर्थे तस्कर[३]-तायु-स्तेन-परिपन्थिन्नादिशब्दाः ऋग्वेदे, तत्परवर्तिसाहित्ये च प्रयुक्ताः सन्ति। ऋग्वेदे[४] तस्कर-शब्दः चोरार्थे साहसिकार्थे च प्रयुक्तः स्तेनस्य समानार्थक इव प्रतिभाति। वाजसनेयिसंहितायां[५] गृहेषु सामान्यचौर्यनिरतो मलिम्लुक्, साहसेन परस्वहर्ता स्तेनः तस्करो वेति उक्तं विद्यते। ऋग्वेदेऽपि[६] वने गुप्तः साहसिकः सङ्कटोन्मुखश्च चौरः तनूत्यजा वनगूं चोक्तः। ऋग्वेदे[७] तस्करं स्तेनं च दृष्ट्वा श्वबुक्कनस्य वर्णनं समर्थयति यदनयोः शब्दयोः सामान्यगृहचौरार्थमपि प्रयोग आसीदिति। अथर्ववेदे[८] स्तेमतस्करयोः प्रयोगो गृह्य एव श्वानां चोरार्थे विहितः। संहितासु[९]

---

निरुक्ते—(ङ) तनूत्यजेव तस्करा......रभ्यधीयताम्। तनूत्यक् तनूत्यक्तावनगूं-वनगामिनौ अग्निमन्थनौ बाहू तस्कराभ्यां प्रमिमीते। तस्करः तस्करोति यत् पापकम् इति नैरुक्ताः तनोतेः वा स्यात्। ३।१४

२. तैत्तिरीयआरण्यकअन्तिमखण्डे १०-३५

३. (क) ऋग्वेदे ७-५५-३ (ख) अथर्व० १९-४७-७ (ग) अथर्व० १९-५०-३ (घ) यजुः० ११-७९, १६-२१,

४. ऋग्वेदे १-१९१-५

५. यजुः० ११।७९, तैत्ति० "वै सौम्यस्य राशो मलिम्लुसेना य एवं विद्वान् माऽण्णा आमीध्र उपवासयति नैनं मलिम्लुसेना विन्दति" ६।३।२।६, अथर्व० १९-४९-१०

६. तनूत्यजेव तस्करा वनगूं रशनाभिः दशभिःरभ्यधीताम् ऋग्वेदे—१०-४-६

७. ऋग्वेदे ७-५५-३।

८। अथर्ववेदे १९-५०-५

९. (i) पश्वा न तायुं गुहा च तन्तं नमो युजानं नमो वहन्तम्। ऋग्वेदे १-६५-१
(ii) अव राजन् पशु तृप न तायुं सृजा वत्सं न दाम्नो वसिष्टम्।
ऋग्० ७-८६-५
(iii) उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशति क्षितयो भरेषु। ऋग्० ४।३८।५
(iv) सद्यो यः इन्द्रो विवितो धवीयान् न तायुरति धन्वाराट्। ऋग्० ६।१२।५

तायुशब्दः सामान्यचौराय, पशुचोराय, वस्तुचौराय ऋणग्रस्ताय जनाय च प्रयुक्तो विद्यते। वाजसनेयि[१०]संहितायाः शतरुद्रियमहामंत्रे रुद्रो हन्तॄणां चोराणां साहसिकानां स्तेनानां परस्वापहर्तॄणां छेत्तॄणाञ्चाधिपतिरुक्तः तेषां गृत्सानां[११] गणानां व्रातानाञ्चोल्लेखश्च विद्यते। भगवता पतञ्जलिना स्वमहाभाष्ये पश्यतोहरशब्द-प्रसङ्गे कुशलचोरविषये "चोररूपोऽयं यदक्ष्णोरपि अञ्जनं हरेत्। दस्युरूपोऽयमपि धावतो लोहितं पिबेत्।" (महा० ५।३।६) इति कथितम्।

दण्डविधानप्रकरणेषु वैदिकवाङ्मये स्मृतिनिबन्धग्रन्थेषु च बहवः चोरप्रसङ्गा वर्तन्ते। वैदिकमन्त्रेषु दृश्यते यद् वञ्चिता जनाः चोरदण्डविधाने स्वातंत्र्यं लब्धवन्तः। स्तम्भेषु[१२] चोराणां बन्धनमपि तेषु वर्णितम्। परवर्ति-

---

(v) No doubt this theft is the result of the despair at being in debt which might lead loss of liberty ऋण.

वैदिक इंडेक्स मेकडोनल एण्ड कीथ—Vol II PP 303.

(vi) धिगस्तु खलु दारिद्र्यम् अनिर्वेदितपौरुषम्, यदेतद् गर्हितं कर्म निन्दामि करोमि च। मृच्छ० ३-१६

१० (क) नमः कृत्स्नाय तया धावते सत्वनाम्पतये नमो'''परिचराबारण्यानाम्पतये नमः। यजु० १६-२०

(ख) यजु० १६-२१) ( आव्याधिन्-स्तेन-तस्कर-तायु-मुष्णन्त-विकृन्तानां पतये नमः )

११. नमो गणेभ्यो गणपतिभ्यश्च, नमो व्रातेभ्यो व्रातपतिभ्यश्च, नमो गृत्सेभ्यो गृत्सपतिभ्यश्च। यजु० १६-२२,२३,। तुलना कर्तव्या० तैत्तरीय० ४-५-४-१। काठक० १७-१३। मैत्रायणी० २-६-४।

१२. (क) अवैनं राजा वरुण सस्रुज्याद्विदां'''ऋग्० १-२४-१३

(ख) उदुत्तमं वरुणपाशमस्मद् वाधमं वि मध्यमं श्रथाय
अथा वयमादित्ये व्रते तवो न गसो अदितये स्याम } ऋग्० १।२४।१५

(ग) ऋग्० ७-८६-५। (घ) अथर्व ६-६३

स्मृतिग्रन्थेषु चौर्याणां दण्डविधानानां चातिविस्तृतं वर्णनमुपलभ्यते। बृहस्पति-मतेन[13] चौर्यं साहसकृतं स्तेयमिति द्विविधं साहसश्चतुर्विधः प्रक्रियानुसारं चौराश्चोत्तममध्यमाधमास्त्रिविधा भवन्ति। मनुनारदशङ्खकात्यायनादयः[14] स्मृतिकारा बृहस्पतिमेवानुसरन्तः चोरस्य प्रकाशचरोऽप्रकाशचरश्चेति भेदद्वयम् स्वीकृतवन्तः। गोपनपूर्वकमपहरति यः स चोरः, बलादपहर्ता साहसिकश्चेति सर्वेषाम् आचार्याणां मतम्। अप्रकाशचरस्तु[15] शून्ये निर्जने वा चौर्यरतः, प्रकाशचरस्तु वाक्छलेन व्यापारच्छलेन चापहरतीति।

---

१३. मनुष्यहरणं चौर्यं परदाराभिमर्शनम्। पारुष्यमुभयं चेति साहसं तु चतुर्विधम्॥
हीनमध्योत्तमत्वेन त्रिविधं तत् प्रकीर्तितम्......अप० २।२३० धर्मकोशः

१४. (क) "कात्यायनः—सहसा यत् कृतं कर्म तत्साहसमुदाहृतम्।
सान्वयस्त्वपहारो यः प्रसह्य हरणं च यत्। साहसं च भवेदेवं स्तेय-मुक्तं विनिह्नवः॥ व्यक० १७६"

(ख) शंखः—चौर्यपारुष्यहिंसासाहसपदवाच्याः। सवि० ४५२

(ग) विष्णुः—परदाराभिमर्शस्तेयमुभयं पारुष्यं परहिंसा च।

(घ) नारद सं०—सहसा क्रियते कर्म यत् किंचिद् बलदर्पितैः।
तत्साहसमिति प्रोक्तं सहोबलमिहोच्यते॥
तत् पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा।
उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक्॥
व्यक० १०६ तस्यैव भेदः स्तेयं स्याद् विशेषस्तत्र तूच्यते।
आधिसाहसमाक्रम्य स्तेयमाधिश्छलेन तु॥

१५. प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः।
उत्कोचकाः सोपधिकाः कितवाः पण्ययोषितः॥
प्रतिरूपकराश्चैव मंगला देशवृत्तयः।
इत्येवमादयो ज्ञेयाः प्रकाशाः तस्करा भुवि॥
अप्रकाशास्तु विज्ञेया बहिरभ्यन्तराश्रिता।
सुप्तमत्तप्रमत्तांतान् मुष्णान्त्यत्र च ये नराः॥

मनु[१६] संहितायामस्मिन्विषये विस्तृतविवेचनं वर्तते, यत्र चोरैः सह उत्कोचहरा वञ्चकाः कितवाः वारवनिताश्चापि तथैवाभिमताः। आचार्यकौटिल्योऽपि[१७] एतन्मतमर्थशास्त्रे समर्थितवान्। कण्टकशोधनप्रकरणं पूर्णतया अनेन व्याप्तं विद्यते। तस्य तर्कपूर्णानि सूत्राणि गुप्तचरविभागस्य सिद्धान्तसूत्राणि स्वीकर्तुमर्हन्ति। चोरान्वेषणाय सिद्धवेशधारिणां नियुक्तिः, चमत्कारैः चोरेषु प्रभावोत्पादनम्, वस्तूनि विक्रीणतां क्रीणतां न्यासीकुर्वतां मद्यपानेन स्खलितबुद्धीनां च चोराणां बन्धनं कण्टकशोधनप्रकरणे वर्णितम्। कात्यायनेन[१८] परद्रव्यापहरणमेव चौर्यस्य परिभाषारूपेण स्वीकृतम्। स्मृतिकारबृहस्पतिमतेन चोरप्रकारनिर्णये, दण्डनिर्णये च दण्डाधिकारिणः हृतवस्तुनः मूल्यपूर्वकं पूर्णं ज्ञानमपेक्ष्यते। दण्डविवेकं[१९] कुर्वद्भिः स्मृतिकारैः बहुवारमुक्तं यत् केषांचिद्

---

देशग्रामगृहस्थाश्च पथिघ्ना ग्रन्थिमोचकाः।
इत्येवमादयो ज्ञेया अप्रकाशास्तु तस्कराः॥ १९-५४, ५७ धर्मकोशः

१६. द्विविधांस्तस्करान् विद्यात् परद्रव्यापहारिणः।
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः॥ मनु० ९।२५६
प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः।
प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः॥
उत्कोचकाश्चोपधिकाः वञ्चकाः कितवास्तथा।
मंगलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह॥ मनु० ९-२५७-२५८

१७. समाहर्ता जनपदे.........जनान् प्रणिदध्यात्।.........असौ जाल्मः—प्रभूतद्रव्यः तस्यायमनर्थः ते मैनमाहारयस्वेति—कण्टकप्रकरणे—७३।४
कृतलक्षणाद्रव्यक्रयविक्रयाधानेषु योगसुरामत्तान् वा ग्राहयेयुः ८०।५।१

१८. 'प्रच्छन्नं वा प्रकाशं वा निशायामथवा दिवा।
यत् परद्रव्यहरणं स्तेयं तत् परिकीर्तितम्'॥
कात्यायनः धर्मकोशे पृ० १७६१

१९ (क) गोऽग्न्यर्थे तृणमेधान् वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत,

वस्तूनामपहरणं न चौर्यमिति प्रतिपादितम्। मनुना तु इदमवश्यमेवोक्तं यत् स्वामिनः परोक्षेऽपहरणमेतेषामपि वस्तूनां चौर्यमेवेति। तैत्तिरीयोपनिषद्भाष्य-टीकाकारानन्दगिरिमतं तु इदं वर्तते यत् स्वामिन एव वस्तूनि विज्ञाय पारोक्ष्येऽपहरणं चौर्यं तथा भयं प्रदर्श्य मारणताडनपूर्वकं बलादपहरणं साहस इति। अनेन प्रकारेण चोर-चौर्यदण्डविधानैः सहैव तेषां भेदप्रभेदानां वर्णनैः परिलक्ष्यते यदन्यासां कलानां विकासस्येव चौर्यकलाया विकासस्यापि क्रमबद्ध इतिहासः प्राचीनसाहित्ये विद्यते, येन स्वयमेव शास्त्ररूपं प्राप्तम्। शूद्रकरचित-मृच्छकटिके[२०] नाटके ब्राह्मणः शर्विलकः चारुदत्तसदने यदा चौर्यमारभते तदा प्रथमं कुमारकार्तिकेयमभिवाद्य चौर्यशास्त्रप्रणेतॄन् कनकशक्तिभास्करनन्दियोगा-चार्यादीन् नमस्करोति। अस्मिन्नाटके एतेषां गणनया चोराणां प्राचीन-कालादेवाविच्छिन्नपरम्पराऽस्ति इति परिज्ञायते।

शास्त्राणामध्ययनेन ज्ञायते यदेतेषां सङ्केता अपि भवन्ति। साङ्ख्यकारि-काया व्याख्याकारश्रीमाठराचार्येण[२१] एकत्रिंशत्तमकारिकाया व्याख्या-

---

फलानि चापरिवृतानाम्। गौ० ध० १२।२५, मेधा ८।३३९, मि० या० २।१६६

(ख) "वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च,
तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्। मनु० ८।३३९

(ग) निरन्वयं भवेत् स्तेयं हृत्वापव्ययते च यत्। मनु० ८।३३२

२०. "नमो वरदाय, कुमारकार्तिकेयाय, नमः कनकशक्तये, ब्रह्मण्यदेवाय देवव्रताय नमो भास्करनन्दिने, नमो योगाचार्याय यस्याहं प्रथमः शिष्यः" मृच्छ० तृतीयाङ्के—गद्यम् १६

२१. चोरसेना ग्रामं हन्तुं गच्छति, तत्र चोरसेनापतिना कृतोऽस्ति यदाहं हा, हेति, ब्रवीमि तदा सर्वैः समवायेन प्रवेष्टव्यम्। यदा पुनरहम्-अहो, अहो इति ब्रवीमि तदा निर्गन्तव्यम्। एतां चोरसेनापतेराज्ञामाकूतं ज्ञात्वा चौराः प्रविशन्ति निर्गच्छन्ति च। सां० का० पृष्ठम् ४८ (चौखम्बा०)

प्रसङ्गे लिखितं यत् चोराणामधिपतिः ग्रामेषु अपहरणात् पूर्वं चौरान् संदिशति— हा-हा इति शब्दं श्रुत्वा सर्वे आक्रमणं कुरुत, अहो अहो इति शब्दं श्रुत्वा निवर्तध्वम् इति । सम्भवतः अधिपतिः बाह्यसंकटाद्रक्षणार्थं बहिरेव भवेत् सङ्कटं वीक्ष्य संकेतयेच्च । वर्तमानकालेऽपि साहसिकैः एकत्रागमनाय सम्मेलनाय च मुखेन ध्वनिविशेषः क्रियते । चोरसम्प्रदाये हत्या वर्जिता विद्यते । उपस्थिते प्राण-सङ्कटेऽपि स्त्रीबालवृद्धान् परित्यज्य एव कस्यचिद्धत्यां कर्तुमर्हति । यथा मृच्छकटिकनाटके शर्विलकः चौर्यकाले चारुदत्तस्य दासीं रदनिकामविज्ञाय हन्तुं प्रवृत्तः, ज्ञात्वा स्त्रीहत्याभयात् पलायनमेव निश्चिनोति । अनेन साहसिकेषु स्त्री-हत्या वर्जितेति[२२] सूच्यते ।

चोराणां प्रसङ्गे इदमपि ज्ञेयं यत् कुतश्चिज्जनात् उपहाररूपेण शुल्करूपेण वा धनं परिगृह्य साहसिका न केवलं तस्योपरि आक्रमणं वर्जयन्ति अपितु अन्यैः साहसिकैः कृतेऽप्याक्रमणे प्राणैरपि तस्य रक्षणं विदधति ।

शास्त्रेषु सामान्यरूपेण चौर्यस्य भित्तिच्छिद्रं विधाय आरुह्य द्वारं विभिद्य चेति प्रकारत्रयं परिलक्ष्यते ।

सर्वप्रथमं गुप्तरीत्या ग्रामाणां गृहाणां वा भेदान् विज्ञाय गणकैः मुहूर्तज्ञानं कारयेत् । ज्योतिःशास्त्रे ढौकविद्येतिनाम्ना प्रकरणं चोरेभ्य एव अस्या ढौक-(शकुन) विद्यायाः अध्ययनं चोर-साहसिकाश्चापि कुर्वन्ति । अस्या विद्याया वेत्तारं तेषां गुरुमेवावगच्छेत् । चोरैः सहैव ढौकविद्याविशेषज्ञा निवसन्ति । वर्तमान-कालेऽपि अस्य परम्परा वर्तते । श्रूयते च 'रूपा' नामको दस्युराजः स्वयमेव ढौक-विद्यानिष्णात आसीत् । चौर्यशास्त्रे उपकरणानामपि पृथग् वर्णनं दरीदृश्यते । सन्धिं विधाय चौर्यपरायणेभ्यः चोरेभ्योऽञ्जनम्, शस्त्रम्, सूत्रम्, जलपात्रम्,

---

२२. "रदनिकां हन्तुमिच्छति । (निरूप्य) कथं स्त्री, भवतु, गच्छामि ।
इति निष्क्रान्तः" मृच्छ० तृ० अङ्के

प्रकाशव्यवस्था, लौहशिरस्त्राणम्, बीजम्, आग्नेयकीटः, विमोहकौषधानि, मन्त्राः इत्यादीनि वस्तूनि आवश्यकानि। गृहेषु आरुह्य चौर्यपरायणेभ्यो रज्जुः गोधा इति वस्तुद्वयम् अपि तथा द्वारं विभिद्य अपहर्तृभ्यः कृत्रिमपुरुषश्च पशु-भयार्थं कृषकैः निर्मित इव आवश्यको भवति। उपर्युक्तैरुपकरणैः सज्जिताः चोराः स्वामिकार्तिकेयं प्रपूज्य श्रीढौकबाभ्रव्यकनकशक्तिभास्करनन्दियोगाचार्यजतुकर्णि-आदिचौर्याचार्यान्प्रणम्य च ढौकदत्तैः सूचितदिक्षु निर्दिष्टसमये एव प्रतिष्ठन्ते। प्रस्थानसमये स्त्रीदर्शनम्[२३] अशुभं मन्यते। गुरुं[२४] प्रसन्नं विधाय योगज्ञानमपि आवश्यकं भवति, येन अदर्शनं शस्त्रप्रहारेभ्यो रक्षणं च स्यात्।

सन्धिस्थानानि चतुर्विधानि भवन्ति इष्टिकाभित्तिः पाषाणभित्तिः मृत्तिकाभित्तिः काष्ठभित्तिश्चेति। आद्ययोर्द्वयोर्भेदने ध्वनिगौरवात् काठिन्यं भवति। जलेनार्द्रीकृतायां भित्तौ ध्वनिलाघवात् सुकरत्वं जायते। काष्ठभित्तौ तु रासायनिक-द्रव्यैरेव ध्वनिगौरवाद्रक्षणं सुलभभेदनं च भवति।

आचार्यकनकशक्तिना[२५] पक्वेष्टिकाभित्तौ इष्टकानामपकर्षणम्, अपक्वेष्टिकाभित्तौ इष्टकानां भेदनम्, मृत्तिकाभित्तौ सिञ्चनम्, काष्ठभित्तौ पाटनं चेति चतुर्विधं छिद्रनिर्माणकर्मेति प्रतिपादितम्। तेनैव कारणेन शर्विलकः[२६] जलेन

---

२३. 'स्त्रीजनदर्शनम् न भवेत्' । मृच्छ० ३।१२

२४. तेन च परितुष्टा योगरचना मे दत्ता।
अनया हि समालब्धं न मां द्रक्ष्यन्ति रक्षिणः;
शस्त्रं च पतितं गात्रे रुजं नोत्पादयिष्यति, मृच्छ० ३।१५

२५. "इह खलु भगवता कनकशक्तिना चतुर्विधः सन्ध्युपायो दर्शितः, तद्यथा—पक्वेष्टकानामाकर्षणम्, आमेष्टकानां छेदनम्, पिण्डमयानां सेचनम्, काष्ठमयानां पाटनमिति; मृच्छ० अङ्कः ३

२६. "देशः को नु जलावसेकशिथिलो यस्मिन्न शब्दो भवेद्
भित्तीनां च न दर्शनान्तरगतः सन्धिः करालो भवेत्।
क्षारक्षीणतया च लोष्टककृशं जीर्णं क्व हर्म्यं भवेत्" ॥ मृच्छ०

सिक्तस्य सन्धौ सति नातिदीर्घभाविनः स्थानस्यान्वेषणे लग्नो दृश्यते ।

आचार्यकनकशक्तिमतेन तु सन्धिनिर्माणमपि सप्तविधं[२७] भवति—

(१) कमलमण्डलाकृतिः

(२) सूर्याकृतिः

(३) बालचन्द्राकृतिः (अर्धवृत्ताकृतिः)

(४) वाम्याकृतिः ( वामीशब्दस्तु वडवाशब्दस्य द्विजयोषित्‌शब्दस्य च पर्यायवाची इति कोशः । किन्तु आकृतेर्विषये टीकाकारा अपि मौनमालम्ब्य न किञ्चिदपि अलिखन् । )

(५) विस्तीर्णसन्धिः—नास्य विधेः स्पष्टं रूपं ज्ञायते ।

(६) स्वस्तिकाकृतिः

(७) पूर्णकुम्भाकृतिः

चोरस्तु देशकालपरिस्थित्यनुसारमुपरि लिखितानामेकतमस्य प्रयोगं करोति । आकृतिमनुमातुं प्रमाणसूत्रं च प्रयुङ्क्ते । मृच्छकटिके[२८] शर्विलकः सूत्राभावे यज्ञोपवीतं च प्रयुङ्क्ते कथयति च यत्—

"प्रमाणसूत्रं मे विस्मृतम् ( विचिन्त्य )···

यज्ञोपवीतं प्रमाणसूत्रं भविष्यति । यज्ञोपवीतं हि नाम ब्राह्मणस्य महदुपकरणद्रव्यम् , विशेषतोऽस्मद्विधस्य । कुतः—

२७. (क) पद्मव्याकोशं भास्करं बालचन्द्रं वामी विस्तीर्णं स्वस्तिकं पूर्णकुम्भं , तत्कस्मिन् देशे दर्शयाम्यात्मशिल्पं दृष्ट्वा श्वो यं मद् विस्मयं यान्ति पौराः ।
मृच्छ० ३।१३

(ख) 'इष्टकाभित्तौ संस्कारवशेन पद्मव्याकोशादिसंज्ञा सप्तसन्धयः ।' मृच्छ० पृ० १२८ जीवानन्दविद्यासागरीयटीकायाम्

२८. मृच्छ० ३/१६ पूर्वं गद्यभागे

एतेन मापयति भित्तिषु कर्ममार्ग—
मेतेन मोचयति भूषणसंप्रयोगान्।
उद्घाटको भवति यन्त्रदृढे कपाटे
दष्टस्य कीटभुजगैः परिवेष्टनं च॥"

सन्धिं विधाय चोरो गृहे प्रविश्यान्धकार एव चोरयति। यथावसरं समयानुसारीणि उपकरणानि प्रयुङ्क्ते च। यदि तत्र दीपको[२९] वर्तते तदा आग्नेयकीट-प्रयोगात् तस्यावसानं विदधाति। आग्नेयकीटस्तु दीपके तथा पतति येन तस्य निर्वाणं भवति। गृहस्वामी च दीपनिर्वाणं ज्ञात्वाऽपि कीटमेव कारणं मत्वा सुखं शेते। तत्पश्चाच्चोरः नेत्रयोरञ्जनं करोति येनान्धकारेऽपि सर्वाणि वस्तूनि दृश्यन्ते। अर्धनिद्रितं मन्त्रैः शाययति, औषधं घ्रापयित्वा मोहमुत्पादयति च। चोरयन्तं कश्चिद् गुप्तो वा बहिःस्थानादागतो नाक्रामेदिति शिरसि लौहशिरस्त्राणं प्रयुङ्क्ते। गृहेषु प्रवेशा-नन्तरं द्वारि वा दृश्यस्थाने कृत्रिमपुरुषं स्थापयति, येनाक्रमणकारी तस्मिन्नेवा-क्रमणं तमेवाधिकृत्य कोलाहलादिकं च कुर्यात् चोरश्चास्मान्मार्गान्निःसरेदिति।

चोरस्य स्थितिगतिविषये शूद्रकस्य मतमिदं यत्—

मार्जारः क्रमणे मृगः प्रसरणे श्येनो ग्रहालुञ्चने
सुप्तासुप्तमनुष्यवीर्यतुलने श्वा सर्पणे पन्नगः।
मायारूपशरीरवेशरचने वाग्देशभाषान्तरे
दीपो रात्रिषु संकटेषु डुडुभो वाजी स्थले नौर्जले॥

मृच्छ० ३।२०

---

२९. "ज्वलति प्रदीपः। अस्ति च प्रदीपनिर्वापणार्थम् आग्नेयः कीटः। तं तावत् प्रवेशयामि। तस्यायं देशकालः। एष मुक्तो मया कीटो यात्वेवास्य दीपस्यो-परि मण्डलैर्विचित्रैर्विचरितुम्। एष पक्षद्वयानिलेन निर्वापितो भद्रपीठेन, धिक्कृतमन्धकारम्। मृच्छ० ३।१८ गद्ये

भुजग इव गतौ गिरिः स्थिरत्वे पतगपतेः परिसर्पणे च तुल्यः ।
शश इव भुवनावलोकनेऽहं वृक इव ग्रहणे बले च सिंहः ।

मृच्छ० ३।२१ ।

अनेन प्रकारेण सुरक्षां विधायाभिमन्त्रितं बीजं[३०] क्षिपति । तत्तु गर्भनिहितधन-स्थाने भूमौ अङ्कुरितं भवति, धनस्थानं च ज्ञायते ।

यदा सन्धिं विधाय चौर्येऽसमर्थता भवति तदा दृढे कपाटे समयोपकरणा-नामभावे शुष्के, दृढे, स्निग्धे च भित्तिप्रदेशे गोधेति सरीसृपविशेषस्य च प्रयोगं करोति । एनं सरीसृपं कटिप्रदेशे रज्जुं निबध्योत्क्षिपति । इयं गोधा तु शनैः शनैरुपरि परिसर्पन्ती दृढं स्थानं प्राप्य स्थिरा भवति तदा तमेव रज्जुमवलम्ब्या-रोहति चतुरश्चोरः । तत्पश्चाद् भूतं सर्वमपि कर्मसन्धिं विधाय चौर्ये यथा क्रियते तद्वदेव चौर्यम् प्रारभ्यते ।

सन्धिरहितं भित्तिषु आरोहणरहितं च कपाटोद्घाटनं शास्त्रेषु विचित्रतया वर्णितम् । ग्रन्थेषु कपाटोद्घाटनं भेदसाध्यं यन्त्रसाध्यं मन्त्रसाध्यं तन्त्रसाध्यमौषधसाध्यं जन्मर्क्षसाध्यं चेति प्रतिपादितम् । भेदसाध्यं तु सरलमेव गृहे स्थितान् दासभृत्यादीन् द्रव्यलुब्धान् विभिद्य तैरेवोद्घाटनं कारयेदिति । वर्तमानकालेऽपि एतद्विधं चौर्यं बहुधा श्रूयते । मन्त्रसाध्यन्तु विविधोपकरणैः, कपाटच्छेदनं तान्त्रिकप्रयोगैः मन्त्र-प्रयोगैश्च कपाटोद्घाटनं श्रूयते । औषधसाध्यं तु रासायनिकद्रव्यैः द्रवीकृत्य ध्वनिरहितं भेदनं प्रसिद्धम् । जन्मर्क्षसाध्यं तु टीकशास्त्रे वर्णितं यत् नक्षत्रविशेषो-त्पन्नानां हस्तेन स्पर्शमात्रेणार्गलादिकं भिद्यते इति । कपाटोद्घाटनान्तरं सर्वं कर्म पूर्ववत् भवति ।

सर्वेषु वर्णेषु समाजेषु च चौर्यं तु दोषवती प्रवृत्तिरेव इति मन्यते ।

---

३०. उत भूमिष्ठं द्रव्यं धारयति । तन्मयापि नाम शार्विलकस्य भूमिष्ठं द्रव्यम् । भवतु बीजं प्रक्षिपामि ( तथा कृत्वा ) निक्षिप्तं बीजं न क्वचित् स्फारीभवति ।

मृच्छ० ३।१८

स्यान्नामदेशकालानुसारं परिवर्तनं किन्तु केनापि रूपेण सर्वत्रास्य सत्ताऽस्त्येव।

चौर्यं न कस्यचिज्जातिविशेषस्य धर्मः। ब्राह्मणेनापि शर्विलकेन शास्त्रं कला चेति मत्वाऽस्याध्ययनं कृतं यत् केन प्रकारेण सन्धिं विधाय कीटं प्रयोज्य जलं सिक्त्वा च निःशब्दं कपाटोद्घाटनं स्यादिति। वस्तुतस्तु वरं वृणोति वारयति वेति कस्यचिदपि चोरस्य एकैव जातिः।

साम्प्रतम् दोषयुक्तेति मत्वाऽस्याः कलाया ह्रासो भवति, पाटच्चरत्वं (साहसिकत्वं) वरीवर्धते। प्राचीनशास्त्रीयपरम्परा चौर्यशास्त्रस्य क्षीयत इति प्रतीयते। वैदेशिकसंसर्गैरिदं पाटच्चरत्वं प्रतिदिनं नवीनोपकरणैः नवीनोपायैश्च वृद्धिं भजति। अस्मिन् युग इयं कला तु तेषां चौराणां विद्यते ये जागरण-शीलानामपि कञ्चुकात् हस्तप्रवेशेन कर्तनेन वा द्रव्यमपहरन्ति। एतेषामेव समस्या प्राचीनशास्त्रेषु अपि न समाधीयते। एते (जेबकतराः) प्रकाशचरा अप्रकाश-चरा वेति प्रश्नोऽनिर्णीतो विद्यते एवाऽद्यापि।

प्राचीनभारतस्य चौर्यशास्त्रं पूर्णतया परिशीलनपूरितम् विद्यते। उदरपूर्त्यै[११] स्वावलम्बनमिति अस्य चौर्यस्य प्रसिद्धिरासीत्। विद्वद्भिः समाजवादस्थापनायाः साधनं च मतम् किन्तु समाजनिन्दितं कर्मेति मत्वा इदं चौर्यशास्त्रं सामाजिकै-रुपेक्ष्यते। विदेशेषु चौर्यस्य शिक्षालया अपि श्रूयन्ते। अस्य कलासु गणनया शास्त्रकल्पनायाश्च नायमभिप्रायो विद्वद्वरेण्यानां प्राचीनशास्त्रकाराणां यत् चौर्या-

---

११. कामं नीचमिदं वदन्तु पुरुषाः स्वप्ने च यद् वर्धते
विश्वस्तेषु च वञ्चना परिभवश्चौर्यं न शौर्यं हि तत्।
स्वाधीना वचनीयतापि हि वरं बद्धो न सेवाञ्जलिः
मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्वं कृतो द्रौणिना॥
मृच्छ० ३/१७

गच्छामि, अथवा न युक्तं तुल्यावस्थं कुलपुत्रजनं पीडयितुम्। तद् गच्छामि। मृच्छ० ३/१८

भिधेयं सामाजिकनिन्दितं कर्म शिक्षेयुः। तेषामभिप्रायस्तु चौर्यकलां ज्ञात्वा सामाजिकैः सावधानैस्तेभ्यः स्वधनानां रक्षणमेवासीत्। अनेन तैः समाजः पूर्णतयोपकृतः।

समाजेषु वर्धमानस्यास्य निन्दितकर्मणः चौर्यस्य सम्यग्ज्ञानार्थं गुप्तचर-विभागैर्नेतृभिश्च प्राचीनभारतीयचौर्यशास्त्रस्य अध्ययनम् आवश्यकम्, येन सरलतया एतेषां निवारणं सम्भवेत्। संस्कृतसाहित्ये विद्यमानस्य क्रमशः क्षीयमाणस्यास्य शास्त्रस्य सर्वथा विनाशो न भवेदिति अवधार्य भारतीयविद्वद्भिरेतदनुसन्धेयम्।

काव्यं करोषि किमु ते सुहृदो न सन्ति<br>
ये त्वामुदीर्णपवनं न निवारयन्ति।<br>
गव्यं घृतं पिब निवातगृहं प्रविश्य<br>
वाताधिका हि पुरुषाः कवयो भवन्ति॥

—कस्यापि

डा० धीरेन्द्र वर्मा

# नागरमक्षरम् अथवा नागरी लिपिः

*प्रयागविश्वविद्यालयस्य भूतपूर्वहिन्दीविभागाध्यक्षाणां डॉक्टर-वर्ममहोदयानां सर्वथा नवीनोऽयं विचारो नागराक्षराणाम् ऐतिह्ये प्रस्तुतो भवति। अस्मिन् विषये संस्कृतविदुषाम् सम्मतानि संगमनीपत्रिकायां प्रकाशनाय सादरम् आमन्त्रयामः।*

नागरीलिपिजन्मसम्बन्धे कोऽपि मतभेदो न वर्तते यदस्या रूपं ब्राह्मी-गुप्तकुटिललिपीनां विकसितरूपम् अस्ति, किन्त्वस्या लिपेर्नामकरणसम्बन्धे वयम-द्यापि सन्दिग्धाः स्मः। प्रचलितमतम् तु इदमेव यत् गुर्जरनिवासिभिर्नागर-ब्राह्मणैः प्रयुज्यमानत्वात् अस्या नागरमक्षरम् नागरीलिपिर्वेति नाम जातम्। द्वावन्यावनुमानौ इमावपि स्तो यत् उत्तरभारतस्य नगरेषु प्रचलितत्वात् अस्या

इदं नामाभवत्, अथवा तान्त्रिकचिह्नैः—देवनगरैः—सह एतस्याः लिपिचिह्नानां साम्यात् अस्यै देवनागरम् देवनागरी वेति संज्ञा प्रदत्ता। कालक्रमेण यस्याः संक्षिप्त-रूपं नागरम् नागरी वाऽभवत्[1]। वस्तुतस्तु एतल्लिपिनामोद्गमसम्बन्धेऽनुमान-मात्राण्येव उपर्युक्तमतानि सन्ति। तथास्याः नामसमस्या अद्यापि यावत् तथैव वर्तते। एतस्मिन् प्रसङ्गे नवीनश्चैको निर्देशोऽधो दीयते यस्य विषयेऽधिकमन्वे-षणं परीक्षणं वाऽपेक्ष्यते।

एकस्मिन् प्रकाशितेऽन्यनिबन्धेऽहम् इदं तथ्यं प्रति ध्यानम् आकृष्टवान् अस्मि यत् नागरम् नागरी वेति शब्दस्य प्रयोगः केवलम् एतल्लिपिकृते एव सीमितो नासीत् मध्यकाले। एका नागराख्याऽपभ्रंशभाषाऽसीत्। प्रसिद्धासु वास्तुशैलीषु एका नागरशैली आसीत्, अन्ये द्वे शैल्यौ द्राविडपदेन वेसर (तेलगू) पदेन च व्यवह्रियमाणे आस्ताम्। नागरवास्तुशैल्याः विशेषता तस्याश्चतुष्कोणत्वमवर्तत। द्राविडवास्तुशैलीगतमन्दिरादीनां रचना षट्कोणा अष्टकोणा वाऽभवत्,

---

१. गौरीशङ्कर हीराचन्द्र ओझा—प्राचीनलिपिमाला, पृ० १८, ६८।
ऐनल्स आव दि भण्डारकर ओरियण्टल, इन्स्टीच्यूट, पूना, भागः १४, १९३२-३३, पृ० १०३-१२५, प्रो० दिवाटिया कृतः 'नागर अपभ्रंश एण्ड नागरी स्क्रिप्ट' शीर्षको लेखः।
एपिग्राफिया इण्डिका, भागः १२, १९-२३-२४।
प्रोसीडिंग्ज आव दि एशियाटिक सोसायटी आव बंगाल, अङ्कः २,१८९६, पृ० ११४-१३५, नगेन्द्रवसुकृतः 'दि ओरिजिन आव दि नागर ऐण्ड दि नागरी अल्फाबेट'।
इण्डियन ऐण्टिक्वेरी, भाग : ३५, शामशास्त्रिणो लेखः, पृ० २५३-६७, २७०-९०, ३११-२४।

वेसरशैल्याः विशेषता आसीत्[२] वर्तुलत्वे। नागरवास्तुशैली वस्तुतः आर्यशैली अविद्यत, यस्याः प्रचारः समस्ते उत्तरभारते आर्यावर्ते वा अवर्तत। डा० आचार्यस्य मतानुसारेण पश्चिममध्यदेशस्य जैनवास्तुशैली अस्या नागरशैल्या रूपान्तरमात्रमासीत्, यस्याः प्रचारः राजस्थानमालवगुर्जरान् अभिव्याप्य अभवत्। आबूप्रदेशस्य जैनमन्दिराणां निर्माणमस्यामेव शैल्यां विद्यते[३]। बुन्देलखण्डस्य प्रसिद्धखजुराहोमन्दिराण्यपि अस्यामेव शैल्यां निर्मितानि सन्ति। अस्या मूलोद्गमो यज्ञवेद्यारचनायां भवितुमर्हति।

वास्तुशैल्यारुपर्युक्तविभाजनं मन्दिरादिपर्यन्तमेव सीमितं नासीत्। शिल्परथशिवलिङ्गादयोऽपि नागरादिशैलीनाम्ना प्रसिद्धाः आसन्[४]। उदाहरणार्थम्, चतुष्कोणरचनाया रथो नागरशैल्या रथः कथितः। अतएव ममेदं प्रतिवेदनं यत् ब्राह्मीगुप्तकुटिललिपीनाम् इदं विशेषेण विकसितं रूपं नागराक्षरनाम्ना एतदर्थं प्रसिद्धमभवत् यतो हि अस्याः अक्षराणां रचना मूलतश्चतुष्कोणा आसीत्। उदाहरणाय प ग म भ—आदिलिपिचिह्नानि द्रष्टुं शक्यन्ते। एतद्वैपरीत्येन ब्राह्मया दक्षिणशैलीतः विकसितानां लिपीनाम् अक्षराणि वर्तुलानि अथवा भिन्नाकृतीनि सन्ति, यथा—उत्कलतैलङ्गादीनां लिपिचिह्नानां दर्शनेन स्पष्टं प्रतीयते।

इदं केवलं प्रतिवेदनमात्रमस्ति, यस्य सम्बन्धे निश्चितमतं प्राप्तुम् अनेकेषां प्रश्नानां सुसङ्गतिरापादनीया भविष्यति। यथा नागरनागरीशब्दयोरथवा देवनागरीशब्दस्य प्रयोगः एतल्लिपिकृते निश्चितरूपेण कियत्कालेन प्रारब्धः? एषु त्रिषु नामसु प्राचीनतायाः प्रयोगस्य च दृष्ट्या कः क्रम आसीत्? यस्यां

---

२. वेदाश्रं नागरं प्रोक्तं वस्वश्रं द्राविडं भवेत्।
सुवृत्तं वेसरं प्रोक्तमन्यं स्यात्तु षडश्रकम्॥ मानसारे ४३,१२४-५

३. ४. पी० के आचार्यः—इंडियन आर्कीटेक्टर, पृ० १३७

शताब्द्याम् अस्या लिपेर्नागरादि नाम जातम् तस्यामेव अस्य शब्दस्य उपयोगो वास्तुशैल्यादीनां कृतेऽपि किम् अभवत् न वा ? किम् ब्राह्मया दाक्षिणात्यशैलीनां मध्ये काश्चन कदाचित् द्राविडनाम्ना वेसरनाम्ना च प्रचलिता आसन् न वा, इत्यादि ?

हिन्दीलिपेर्नामकरणसमस्यायाः समाधानार्थम् एकस्यां नवीनायां दिशि अन्वेष्टुं ध्यानाकर्षणमात्रप्रयोजनोऽयं निबन्धः ।

●

व्यासादीन्कविपुङ्गवाननुचिताक्षेपं सलीलं हसन्
उच्चैर्जल्प निमील्य लोचनयुगं श्लोकान् सगर्वं पठ ।
काव्यं स्वीकुरु यत्परैर्विरचितं स्पर्धस्व सार्धं बुधैः
यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥

—कस्यापि

●

# वासन्ती विभा

●

मलयमहीधरपवनः कलकण्ठकलध्वनिर्निकुञ्जलताः ।
उत्कलिका उत्कलिकाश्चेतसि जनयन्ति लोकस्य ॥

—श्रीकण्ठस्य

कावेरीतीरभूमीरुहभुजगवधूभुक्तमुक्तावशिष्टः
कार्णाटीचीनपीनस्तनवसनदशान्दोलनस्पन्दमन्दः ।
लोलल्लाटीललाटालकललितलतालास्यलीलाविलोलो
हा कष्टं दाक्षिणात्यःप्रसरति पवनः पान्थकान्ताकृतान्तः ॥

—राक्षसपण्डितस्य

दृश्यन्ते मधुमत्तकोकिलवधूनिर्धूतचूताङ्कुर—
प्राग्भारप्रसरत्परागसिकतादुर्गास्तटीभूमयः ।
याः कृच्छ्रादभिलङ्घ्य लुब्धकभयात्तैरेव रेणूत्करै-
र्धारावाहिभिरस्ति लुप्तपदवीनिःशङ्कमेणीकुलम् ॥

—मुरारेः

लीलादोलातिखेलारसरभसलसच्चीनचेलाञ्चलानां
चोलीनामापिबन्तो मृगमदसुरभिस्वेदबिन्दूनमन्दान् ।
लोलन्तः केरलीनां कुचकलशलसत्कुङ्कुमालेपनेषु
श्लिष्यन्तो मालवीनां मलयजमृदुलाःकञ्चुलीर्वान्ति वाताः ॥

*—श्रीधनददेवानाम्*

किंशुककलिकान्तर्गतचन्द्रकलास्पर्धि केशरं भाति ।
रक्तनिचोलकपिहितं धनुरिव जतुमुद्रितं वितनोः ॥

*—वल्लणस्य*

वह्निर्मन्ये हिमजलमिषात्संश्रितः किंशुकेषु
व्योमं धूमैः स खलु कुरुते काननं कोरकाख्यैः ।
सन्तापार्थं कथमितरथा पान्थसीमन्तिनीनां
पुष्पव्याजाद्विसृजति शिखाश्रेणिमुद्गाढशोणीम् ॥

*—पौतायनेः*

पानीयं नालिकेरीफलकुहरकुहूत्कारि कल्लोलयन्तः
कावेरीतीरतालद्रुमभरितसुराभाण्डभाङ्कारचण्डाः ।
एते तन्वन्ति वेलावनललितलतातायण्डवं द्राविडस्त्री-
कर्पूरापाण्डुगण्डस्थललुठितरया वायवो दाक्षिणात्याः ॥

*—बिल्हणस्य*

शिलीमुखैरद्य मनोज्ञपक्षैर्विषोपलेपादिव कज्जलाभैः ।
नितान्तपूर्णा मुचकुन्दकोषा विभान्ति तूणा इव मन्मथस्य ॥

—शुभाङ्गस्य

कावेरीवारिवेल्लल्लहरिपरिकरक्रीडनक्रीतशीत-
स्फीतश्रीखण्डखण्डभ्रमणभरभवद्भूरिसौरभ्यगर्भाः ।
चोलस्त्रीचीनचेलाञ्चलकलनकलाक्रान्तकान्तस्तनान्ता
वान्ति प्रेयोवियोगातुरतरतरुणीवैरिणोऽमी समीराः ॥

—कृष्णपिल्लस्य

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नतारापतिमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥

—भट्टविज्जाकस्य

संकुचिता इव पूर्वं दुर्वारतुषारजनितजडिमानः ।
सम्प्रत्युपरमति हिमे क्रमशो दिवसाः प्रसारजुषः ॥

—श्रीधरणीधरस्य

श्री कृष्णमणि त्रिपाठी

# आत्मज्ञानविमर्शः

प्राणिमात्रं सदा सुखमेवाभिलषति, दुःखीभवितुं न कोऽपि वाञ्छति। अल्पेन सुखेन न कस्यचिदस्ति सन्तोषः, सर्वेऽधिकाधिकं सुखं काङ्क्षन्ति। तथाप्रोक्तं छान्दोग्योपनिषदि "नाल्पे सुखमस्ति भूमैवसुखम्।" नित्यप्रवासी जीवो यावदनन्तं सुखन्नावाप्नोति तावत्प्रयतमान एव तिष्ठति। अनन्तं सुखमेव जीवस्य वास्तविकं लक्ष्यमन्तिममुद्देश्यं मानवशरीरलाभस्य मुख्यं फलञ्चास्ति। अनन्तसुखोपलब्धिरेव मुक्तिः, मोक्षः, अपवर्गः, निर्वाणम्, कैवल्यम्, निःश्रेयसम्, परमपुरुषार्थश्चोच्यते। एतदेव लब्ध्वा जीवः कृतकृत्यो भवति, तदर्थं किञ्चित् कर्तव्यं नावशिष्यते। इदमेव सुखस्य चरमा सीमा परमा च गतिरस्ति। अतएव भगवता श्रीकृष्णेनोक्तं श्रीमद्-भगवद्गीतायाम्—

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते॥

इह खलु जगतीतले केचन रोगग्रस्ताः, कतिपये दारिद्र्यार्दिताः, केचित्पुत्र-चिन्तातुराः, कियन्तो राजदुःखदुःखिताः, परे प्रजापालनपीडिताः, इतरे मानव-

हानिहेयजन्मानः, अपरे राज्यदण्डव्यथितहृदयाः, केचनान्धाः, केऽपि बधिराः, केचित्कुब्जाः, कतिपये पङ्गवः, परे मूकाः, अपरे वाचालाः, अन्ये गृहहीनाः, इतरे च दीनाः। एवमनुदिनं दुःखसन्ततिं भुञ्जाना विलोक्यन्ते प्राणिनः।

न चैवं निश्चयो विश्वासो वा भवति यदग्रे कियत्कालानन्तरमापद्भ्य एताभ्यो विमुक्ता भविष्यन्ति मानवाः। यादृशैः प्राक्तनकर्मभिरेवेदानीं दुःखोपलब्धिः तादृशैरेवाधुनिकैः कर्मभिः भाविन्यपि जन्मनि अवश्यं दुःखावाप्तिरिति समुचितमनुमानम्, अतएवोक्तं गारुडे—

कुर्वते कर्मभोगाय कर्म कर्तुं च भुञ्जते।
नद्याः कीटा इवावर्तादावर्तान्तरमाशु ते॥
व्रजन्तो जन्मनो जन्म लभते नैव निर्वृतिम्।
यथा तृणजलौकेयं देही कर्मगतिं गतः॥ २७।३१-३२

न चात्र पुण्यकर्मभिः नितरां सुखव्याप्तिरिति कल्पयितुं शक्यम् आसंसारं त्रिविधदुःखाभिघातस्यावश्यं भावित्वात् पुण्यकर्मभिः सुखोपलब्धावपि तत्फलभोगानन्तरं दुःखप्राप्तेरनिवार्यत्वाच्च। तथात्रोक्तं गीतायाम्—

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयी धर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते॥ ९।२१

न च कस्मैचिदपि दुःखमिष्टम्। एवं स्थितौ अस्माकं पूर्वजैः भारतीयैर्महर्षिभिः साधु विचारितं सम्यक् परीक्षितं सुनिश्चितं सत्प्रतिपादितं सुसिद्धान्तितआत्मज्ञानमेवात्यन्तिकैकान्तिकदुःखोपघाताय समर्थं भवति। अतएवोक्तमीश्वरकृष्णेन सांख्यकारिकायाम्—

दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ।
दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावात्॥१॥

न चात्मज्ञानं विना आत्यन्तिकी ऐकान्तिकी च दुःखनिवृत्तिः सुखावाप्तिश्च सम्भवति। अतएव भगवती श्रुतिः स्पष्टमुद्घोषयति—

"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनाय," "ऋते ज्ञानान्न मुक्तिः।" सर्वमिदं मानवयोनावेव सम्भवति यतस्तदितरयोनीनां भोगयोनित्व-मेवास्ति। अतस्तत्र नास्ति कर्मणामधिकारव्यवस्था। विधातुः सृष्टेः वैचित्र्यात् मानव एव केवलमीदृशोऽस्ति यो विचिन्त्य स्वशुभाशुभे विमोक्तुमर्हत्यात्मानं मृत्योः पाशात्। अतएव सृष्टिनिर्माणावसरे ब्रह्मदेवस्य मनुष्यनिर्माणादेव सन्तोषोऽजायत। तथाचोक्तं श्रीमद्भागवते—

सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या
नाना सरीसृपपशून् खगदंशमत्स्यान्।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्मावलोकधिषणं मुदमाप देवः॥ ११।९।२८

अतएव सम्प्राप्य मानवशरीरमवश्यं विज्ञेयमात्मतत्त्वम्। अयमेव परमः पुरुषार्थः, उत्कृष्टा सिद्धिः श्रेष्ठा च सम्पत्। अनेनैव मानवजन्मनः साफल्यमेतेनैव कृतार्थोऽयं जीवः, अमुनैव वसुन्धरा वस्तुतो वसुन्धरा। अतएवायमुपनिषदां डिण्डिमघोषः—"इह चेदवेदीदथ सत्यमस्ति नोचेदवेदीन्महती विनष्टिः।" भगवती गीतापि—

ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी॥
निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत्॥ १५।४-५

इह नानाक्लेशान् भुञ्जानान् नरान् समुद्धर्तुकामनया धृतावताराः पूज्य-पादाः श्रीशङ्कराचार्यचरणा अपि—

लब्ध्वा कथञ्चिन्नरजन्म दुर्लभं
तत्रापि पुंस्त्वं श्रुतिपारदर्शनम्।
यस्त्वात्ममुक्तौ न यतेत मूढधीः
स आत्महा स्वं विनिहन्त्यसद्ग्रहात्॥

श्रीमद्भागवतस्य पञ्चमे स्कन्धे भगवान् ऋषभदेवोऽपि स्वपुत्रेभ्योऽस्यैवार्थस्यात्युत्कृष्टतां परमोपदेशत्वञ्च प्रतिपादयति—

गुरुर्न स स्यात् स्वजनो न स स्यात्
पिता न स स्याज्जननी न सा स्यात्।
दैवं न तत्स्यान्न पतिश्च स स्यात्
न मोचयेद्यः समुपेतमृत्युम्॥ ५।५।१८

अतएव गरुडपुराणे ज्ञानिनां कृते आत्मज्ञानस्य परमोत्कृष्टता ततो न पुनरावृत्तिरुद्घोषिता—

यतीनां यतचित्तानां ज्ञानिनामूर्ध्वरेतसाम्।
आनन्दं ब्रह्म तत्स्थानं यस्मान्नावर्तते पुनः॥
योगिनाममृतस्थानं व्योमाख्यं परमं पदम्।
आनन्दमैश्वरं यस्मान्मुक्तो नावर्तते पुनः॥ ४९।२७-२८

आत्मदर्शिनो वृद्धा ज्ञानमेव परमं कल्याणसाधनमामनन्ति। यतो हि शुद्धज्ञानद्वारैव मनुष्यः सर्वपापेभ्यो विमुक्तो भवति। यथा दीपकमादाय मानवोऽन्धे तमसि निर्भयं गच्छति, तथैव साधकाः ज्ञानदीपकप्रकाशे परमात्मानमसंशयं प्राप्नुवन्ति। यथा वा नावमन्तरा भयङ्करं समुद्रं तर्तुं न शक्नोति मानवः, तथैव ज्ञाननौकां विना भवसागरपारं गन्तुं न शक्नोति कश्चित्। ये ध्यानयोगमाश्रित्य सदा प्रसन्नचेतसः तिष्ठन्ति ते आत्मवित्तया सुखराशिं परमात्मानं प्राप्नुवन्ति।

ध्यानयोगमुपाश्रित्य प्रसन्नमतयः सदा ।
सुखोपचयमव्यक्तं प्रविशन्त्यात्मवित्तया ॥

म० भा० १४।५१।२३

महाभारतस्याश्वमेधिकपर्वणि अनुगीतायां शरीरमिदं वृक्षरूपकत्वेन निरूपितम् । प्रकृतिरेवास्य देहवृक्षस्य मूलमस्ति । बुद्धिरस्ति स्कन्धः । अहंकारः शाखास्ति । इन्द्रियाणि अङ्कुराणि कोटराणि च । पञ्चमहाभूतानि शोभाधायकानि पल्लवादीनि सन्ति । अत्र सर्वदा संकल्पविकल्परूपाणि पत्राणि प्रादुर्भवन्ति विकसन्ति च । शुभाशुभैः कर्मभिः प्राप्यानि सुखदुःखानि एव फलानि अत्र फलन्ति । एवं प्रकृतिबीजात् प्रादुर्भूतो देहरूपो वृक्षः प्राणिनां जीवनाधारः । बुद्धिमान् पुरुषः तत्त्वज्ञानासिना वृक्षमिमं विच्छिद्य जन्ममृत्युजरोदयान् पाशान् छित्वा ममताहंकाररहितोऽवश्यं विमुच्यते । तस्मादात्मज्ञानायावश्यं प्रयतनीयम् ।

●

## जन्मभूमिः

●

वङ्गैः संगीतकीर्तिः कलितकलकलश्चोत्कलैरान्ध्रबन्धु—
मैद्रैरुन्निद्रमुद्रो जवजनितजयोद्गुर्जरः सिन्धुबिन्दुः ।
पञ्चापैरञ्चितश्रीर्मधुमधुरधुरो मध्ययुक्तैर्बिहारै—
रार्यावर्त्ताभिधानो जयति जनपदो मानिनां जन्मभूमिः ॥

—कवितार्किकचक्रवर्तिनो महादेवशास्त्रिणः

●

# आस्माकीनम्

सममेव महाकविकालिदासस्य जयन्तीसमारोहायोजनेन प्रयागस्थसंस्कृत-साहित्यपरिषदा 'संगमनी' नाम्नीं पत्रिकां प्रकाशयितुं शुभसङ्कल्पोऽक्रियत। 'श्रेयांसि बहुविघ्नानि' इति नियमानुसारमत्रापि बह्वन्तरायात् पावनमिदं कार्यमनेकेभ्यो वर्षेभ्योऽनन्तरं चारितार्थ्यमुपैति।

अस्य महतो देशस्य राष्ट्रीयैक्यार्थं संस्कृतस्याध्ययनानुशीलने कियदावश्यके इति नाप्रत्यक्षं प्रेक्षावताम्। अन्तरा संस्कृतस्याध्ययनं वयं स्वजातीयगौरवं राष्ट्रीय-बोधं स्वीयोन्नतपरम्पराया मापदण्डञ्चावगन्तुं कदापि न पारयामः। अस्यां विंश-शताब्द्यां संस्कृताध्ययनानुशीलनयोर्दत्तावधानान् पाश्चात्यविदुषो दृष्ट्वाप्यस्माभिः संस्कृतम्प्रति दृढानुरागैरस्य चाध्ययनाय राष्ट्रीयमान्यतानुरूपं प्रयत्नशीलैश्च भाव्यम्। स्वतन्त्रताप्राप्त्यनन्तरमिदं राष्ट्रीयकर्तव्यं प्रति यावती सतर्कताऽपेक्षणीयाऽसीत्तावती नास्माभिर्दर्शिता। संगमनीपत्रिकाऽनेनैवोद्देश्येन परिषदा प्रकाश्यते यत् संस्कृत-भाषायां तस्या विशालवाङ्मये चाभिरुचिं गृह्णन्तो विद्वांसोऽस्या माध्यमेन यदा-तदा संस्कृतवाङ्मयस्य विभिन्नेष्वङ्गेषु स्वल्पमनल्पं वा गवेषणात्मकमनुशीलनात्मकं च विचारं व्यक्तीकरिष्यन्ति, तथा स्वकीयान् नवीनान् विचारान् प्रकटयितुकामाः संस्कृतस्योत्साहिनः स्नातकाः संगमन्या द्वारेण स्वविचारान् संस्कृतजगति प्रकाश-यिष्यन्ति। इत्थं संगमनी पवित्रराष्ट्रीयकर्तव्यमेकं संवाहयिष्यति।

वयं दृढं विश्वसिमो यदस्मिन् दुर्वहे कार्ये संस्कृतानुरागिणां राष्ट्रभक्तानां हार्दिकसहयोगोऽस्माभिः प्राप्स्यते तथा तेषामनुरागाद् बलं प्राप्य वयमिदं कार्यं दिनानुदिनमग्रेसारयितुं प्रभविष्यामः।

संगमनीपत्रिकाया अपरापीयं योजना यत् संस्कृतस्याप्रकाशितग्रन्थानां प्रका-शनं क्रमशोऽस्यां भविष्यति। पत्रिकायाः प्रस्तुतेऽङ्के परिषदस्तत्त्वावधाने प्रभात-शास्त्रिणा सम्पादिता आचार्यकविचन्द्रविश्वेश्वरस्य चमत्कारचन्द्रिकायाः प्रथमो

विलासः प्रकाशितोऽस्ति। अनेन प्रकारेण संस्कृतवाङ्मयस्याप्रकाशितसामग्रीणां पुनरुद्धारोऽप्यस्याः पत्रिकाया लक्ष्यं वर्तते।

## श्रद्धाञ्जलिः

संवत्सरोऽयं संस्कृतजगतः कृतेऽतीव शोकप्रदोऽभूत्। अस्मिन् वर्षे अयोध्यातः प्रकाश्यमानस्य साप्ताहिकसंस्कृताख्यपत्रस्य सम्पादकः सञ्चालकश्च पण्डितकालीप्रसादत्रिपाठी दिवंगतो जातः। तेन विदुषा यया निष्ठया येनाध्यवसायेन च विगतत्रिंशद्वर्षाणि साप्ताहिकसंस्कृताख्यपत्रस्य प्रकाशनं कृतं तयोस्तुलना कर्तुं न शक्यते।

पण्डितकालीप्रसादः संस्कृतस्य भावप्रवणः कविरासीत्। तस्य सुमधुररागयुक्तं भावभङ्गिमभूषितं कवितापाठं श्रुत्वा जनाः मन्त्रमुग्धाः भवन्ति स्म। सः पूर्णायुषि नश्वरं कलेवरमजहात्। एतदालोच्यास्माकं चेतो नितरां चेखिद्यते यत् भारतस्य महामहिमभाषाया देववाण्याः कवेरस्य, विशेषरूपेण संस्कृताख्यपत्रस्यातिधैर्यवतोऽस्य सम्पादकस्य वा सम्मानं न संस्कृतसमाजः कृतवान्, नास्माकं राष्ट्रशासनेनैव तस्य कर्मठसम्पादकस्य सेवायाः मूल्याङ्कनं प्रति स्वीयोऽनुरागः प्रादर्शि। संगमनीपरिवारः सुगृहीतनामधेयस्य पण्डितकालीप्रसादस्य शोकसन्तप्तपरिवारेण सह समवेदनां प्रकटयन् स्वर्गतस्यात्मनः सद्गत्यर्थमीश्वरं प्रार्थयते।

ऐषम एवास्माकं संस्कृतसमाजस्याधारस्तम्भाः महामहोपाध्यायपण्डितमथुरानाथभट्टः, वैयाकरणकेशरी पण्डितसभापतिउपाध्यायः, केरलनरेशः, अनन्तकृष्णशास्त्री, ब्रह्मदत्तजिज्ञासुश्च इहलोकं परित्यक्तवन्तः। एषु महानुभावेषु दिवंगतेषु सत्सु संस्कृतसमाजस्यापूरणीया क्षतिरभवत्। भगवतः ईशस्यानुकम्पया संस्कृतसमाजस्तादृग्बलं प्राप्नोतु येनास्याः क्षत्याः पूर्तिर्जायेत। परमेश्वरः तेभ्यो दिवंगतात्मभ्यः सद्गतिं तेषां परिवारेभ्यश्च शान्तिं प्रयच्छतु।

●

विश्वेश्वरकविचन्द्रप्रणीता

# चमत्कारचन्द्रिका

●

सम्पादकः

प्रभातशास्त्री, साहित्याचार्यः

Viśweśwarkavicandrapraṇītā

# CAMATKĀRACANDRIKĀ

●

Edited by

Prabhat Shastri, Sahityacharya

अस्त्येषा चमत्कारचन्द्रिका विश्वेश्वरकविचन्द्रस्य संस्कृतकाव्यशास्त्रविषये नूतनमार्गोल्लासिनी चिन्तनभूतिः कृतिः। एष आचार्यो दाक्षिणात्यः, सिङ्गभूपालराजसभायां चासीदिति चमत्कारचन्द्रिकास्थसिङ्गभूपालप्रशंसया सम्यग् ज्ञायते। *चमत्कारचन्द्रिकाया एतत् प्रथमं प्रकाशनम्।* 'संगमनी' पत्रिकायां यथाक्रमं प्रत्यङ्कमेषा प्रकाशिता भविष्यति। प्रकाशनमनु एतद्विषयिणीं विस्तृतभूमिकामपि पाठका अवलोकयिष्यन्ति। अस्याः सम्पादनं प्रयागस्थसंस्कृतसाहित्यपरिषदोऽवधाने प्रभातशास्त्रिणा व्यधायि। सम्पादनकार्ये तिसृणां पाण्डुलिपीनां साहाय्यं सोऽलभत। पादटिप्पण्यां क० ख० ग०—इत्येभिः चिह्नैः तासामेव सङ्केतः।

संगमनी-सहसम्पादकः

विश्वेश्वरकविचन्द्रविरचिता

# चमत्कारचन्द्रिका

वाग्देवी वदने मम स्फुरतु या ध्वन्यात्मनोल्लासिनी[१]
वर्णव्यक्तिमुपागता च तदनु स्थानप्रयत्नादिभिः ।
भावानां पदसंज्ञया विदधती त्रेधा समुल्लेखना-
न्यानन्दाननुसन्दधाति विदुषां प्राप्ता महावाक्यताम् ॥

रम्योक्त्यर्थतनूज्ज्वला रसमयप्राणा गुणोल्लासिनी
चेतोरञ्जकरीतिवृत्तिकथिता पाकं वयो बिभ्रती ।
नानालङ्करणोज्ज्वला रसवती सर्वत्र निर्दोषतां
शय्यामञ्चति कामिनीव कविता कस्याऽपि पुण्यात्मनः ॥

कृतिरभिमतकृतिचतुरा यदि चतुरोदात्तनायकगुणोदारा ।
इति लक्षणकृतिरत्नं रचये श्रीसिङ्गनृपगुणोदाहरणम् ॥

लोके राघवपाण्डवाद्भुतकथागन्धानुसन्धायिनौ
तौ ग्रन्थाविव तन्मुनिप्रणिहितौ श्रीसिङ्गभूपाश्रयः ।
यायादादरणीयतां कृतधियां ग्रन्थोऽयमस्मत्कृतो
नाऽहं यद्यपि तादृशोऽस्म्ययमसौ राजा हि तादृग्गुणः ॥

नृणां विधौ च नाथे च शिक्षाकाव्यप्रयोजनम् ।
शिक्षा च न चमत्कारं चोदिता स्थिरतां भजेत् ॥

चमत्कारस्तु विदुषामानन्दपरिवाहकृत् ।
गुणं रीतिं रसं वृत्तिं पाकं शय्यामलङ्कृतिम् ॥

---

१. धन्यात्मनो०, ग०

सप्तैतानि चमत्कारकारणं ब्रुवते बुधाः ।
गुणादीनां वाक्यशोभा कृतौ साधर्म्ययोगतः ॥
एकाङ्गतैव काव्यस्य कथिता कुब्जकादिभिः ।
गुणभूषारसान्यस्य श्रीदयङ्गान्याह भोजराट् ॥
सप्ताङ्गसङ्गतं काव्यं साम्राज्यमिव भासते ।
लक्ष्यते तदिदं साङ्गं मया कृतधियां मुदे ॥
अत्रालङ्करणे भवन्तु सुधियः स्निग्धा इति प्रार्थना
व्यर्थो यद्धुरतादिभक्तिषु मतिर्येषां तलस्पर्शिनी ।
ते सारज्ञतयैव बिभ्रति मुदं ये संशयेनास्फुटा-
स्ते सन्देहनिवृत्तये हृदि धियं कर्तुं यतन्ते स्वयम् ॥
वागर्थौ सचमत्कारौ काव्यं काव्यविदो विदुः ।
वाक्छब्द इति पर्यायौ वाग्भिरर्थः शिवः स्मृतः ॥
सा वाक् त्रेधा स्मृता वर्णः पदं वाक्यमिति क्रमात् ।
अकारादिहकारान्ता वर्णाः स्युर्मातृकाह्वयाः ॥
अल्पप्राणा महाप्राणा इति ते द्विविधा मताः ।
बुधास्तत्र महाप्राणानाहुरूष्मचतुष्टयम् ॥
वर्गेषु समवर्णाश्च सवर्गं केचिदीरते ।
अल्पप्राणास्तु शेषाः स्युः शसावपि परैः स्मृतौ ॥
उभये तेऽपि कथिताः स्निग्धा रूक्षा इति द्विधा ।
अल्पप्राणाः सजातीयैर्युक्ताः स्निग्धा इति स्मृताः ॥
स्वैरन्यैर्वा महाप्राणा युक्ता रूक्षाः परैः पुनः ।
अल्पप्राणाश्च कथिता रूक्षा यरलवैर्युताः ॥
सानुस्वारतया स्नैग्ध्यं यान्ति रूक्षा अपि क्वचित् ।
भेदो ज्ञेयस्तस्य सङ्ख्या वन्ध्यवन्ध्याविके बुधैः ॥

यथौचितमिमे वर्णा रसादेरुपयोगिनः ।
न्यस्ताः काव्यमुखे वर्णास्तत्तद्दैवतमूर्तयः ॥
कर्तुः कारयितुः श्रोतुः कल्पयन्ति शुभाऽशुभे ।
अकारः प्रीतिदायः स्यान्निषेधे तु विपर्ययः ॥
आकारो हर्षदः सोऽपि क्रोधात्योदिषु नोचितः ।
इकारादिचतुष्कन्तु कुर्यात् तुष्टिमनोरथौ ॥
ऋकारादीनि चत्वारि सन्ततिस्तम्भहेतवः ।
एकाराद्याश्च चत्वारः कामवाङ्मोक्षभूतिदाः ॥
लक्ष्मीकरः कवर्गः स्याच्चकारः कीर्तिनाशनः ।
छजकारौ रोगहरौ झञौ तु मरणप्रदौ ॥
टठकारौ खेदकरौ डः शुभो ढस्त्वकान्तिकृत् ।
वस्तुलाभकरो णस्तु तकारो विघ्ननाशनः ॥
थकारो युद्धकारी स्यात् दधकारौ धृतिप्रदौ ।
नकारस्तूपकृत् कश्चिदनिषेधे शुभः स्मृतः ॥
रक्षादायी पकारः स्यात् फकारः साध्वसप्रदः ।
आरोग्यकृत् बकारः स्याद् भकारः स्मृतिभाग्यकृत् ॥
मकारः क्षोभकृद् यस्तु श्रीदो रेफस्तु दाहकृत् ।
लो जाड्यकृद् वकारस्तु रागारोग्यायुषां खनिः ॥
ऊष्माणः सुखभेदश्रीनिर्वाणनिधयः क्रमात् ।
क्षं विना क्रूरसंयुक्तः सौम्यस्त्याज्यो विषान्नवत् ॥
श्लेषस्तु कुभयोः श्रेयान् श्रीविश्राणनयोरिव ।
गुरुः पुनरमी द्वेधा··· ··· ···१

१. अत्रांशोऽपाठ्यः ।

अनुस्वारविसर्गान्ता दीर्घयुक्तपराः प्लुताः ।
गुरवो लघवस्त्वन्ये स्मृतास्ते तु त्रयो गणाः ॥
मयरसतभजनसंज्ञा गणाः प्रसूताः परस्तु पूर्वस्मात् ।
जन्योऽत्र जनकनिकटे सुतवद्वितनोति नाशुभं कर्म ॥
सर्वमूलं तु मगणं प्राप्य सर्वगणः शुभः ।
पूर्वाचार्योदितन्तेषां लक्ष्म दैवं फलं ब्रुवे ॥
क्षेमं सर्वगुरुर्धत्ते मगणो भूमिदैवतः ।
करोत्यर्थानादिलघुः यगणो वारिदैवतः ॥
भीतिदायी मध्यलघू रगणो वह्निदैवतः ।
कुरुतेऽन्त्यगुरुर्नाशं सगणो वायुदैवतः ॥
ईशत्वमन्तिमलघुः तगणो व्योमदैवतः ।
रुजाकरो मध्यगुरुः जगणो भानुदैवतः ॥
आदिगुरुः सौख्यदायी भगणश्चन्द्रदैवतः ।
धनङ्करः सर्वलघुः नगणो यज्ञदैवतः ॥
अष्टौ जातिष्वमी प्रोक्ता यात्रायान्तु त्रयः स्मृताः ।
गण इह तु लघुचतुष्कं द्वे वा गुरुणी लघुद्वयं वैकगुरुः ।
सर्वलघोः सर्वगुरोरेकगुरोरपि च पूर्ववद्दैवफले ॥
शुभं काव्यमुखे न्यसेद् गणं वर्णं न[1] नाशुभम् ॥
'अस्त्युत्तरस्यां'[2] 'वागर्थौ'[3] 'कश्चित्कान्तेत्युदाहृतिः'[4] ।
कालिदासत्रये ज्ञेया शुभयोर्गणवर्णयोः ॥
'श्रियः कुरूणामित्यत्र'[5] 'श्रियः पति' रितीह[6] च ।

१. अत्र 'च' प्रयोगः सङ्गतः । २. कुमारसम्भवस्य प्रथमं छन्दः । ३. रघुवंशस्याद्यः श्लोकः । ४. मेघदूतस्यारम्भः । ५. किरातार्जुनीयस्य प्रथमं पद्यम् । ६. शिशुपालवधस्याद्यं छन्दः ।

वेष्टुं जगणदोषस्य कृते श्रीश्रीपतिस्मृतिः ॥
यद्वा तगणसान्निध्यात् तज्जन्यो जगणः शुभः ।
'इदं कविभ्य'[१] इत्यत्र पुनर्मगणयोगतः ॥
मङ्गलार्थेऽभिधाने वा देवनामाङ्कनेऽपि वा ।
गणो न दूष्यो वर्णश्च देवताधिष्ठिताश्मवत् ॥
'चतुर्मुखमुखे'[२] त्यादौ चवर्णो जगणोऽपि च ।
ब्रह्मनामाङ्कितत्वेन काव्यादावपि शोभनौ ॥
'शृंगारवीरसौहार्दमि' त्यत्र तु कृतेर्मुखे ।
ऋवर्णगः शकारोऽपि मङ्गलार्थो विशिष्यते ॥
'प्रसक्तेः पात्रमि' त्यादौ प्रकर्षस्याभिधानतः ।
पकारो रेफयुक्तोऽपि स्फुटं काव्यमुखे शुभः ॥
मुखे प्राक्तनकाव्यस्य प्रामाण्यमनुबध्नतः ।
दुष्टे वर्णे गणे धीमान् कुर्यादेवं विचारणाम् ॥
प्राच्यां प्रायेण गम्भीरा वाचस्तदधुनातनैः ।
तदुदाहृतिमात्रेण लङ्घ्यो लक्षणसंस्थितिः ॥
नियमोऽयं वर्तमाननायकस्तुतिगोचरः ।
न भूतपूर्वविषय इति केचन मन्वते ॥
तच्चिन्त्यमथवा त्याज्यं दाक्षिण्येन किमीदृशा ।
प्रबन्धेऽपि पुरा भूतनेतृत्वञ्च निबन्धने ॥
कर्तुः कारयितुः श्रोतुः फलाकाङ्क्षाप्रवृत्तितः ।
निर्दोषस्यैव काव्यस्य परोत्पादनशक्तितः ॥
मर्यादाया अभावेन यथेच्छोक्तिप्रसंगतः ।

---

१. उत्तररामचरितस्यादिमं छन्दः । २. काव्यादर्शस्य प्रथमः श्लोकः

पद्ये दोषश्रुतेश्चैव नैतत् प्रज्ञावतां मतम् ॥
एकस्मिन्नपि नष्टं स्यात् दृष्टे दोषे यथायतम् ।
दोषस्यैतादृशी शक्तिः सहजा किन्तु कुर्महे ॥
तस्मात्सर्वप्रयत्नेन धर्मार्थाद्यभिलाषिणा ।
कविना दोषलेशोऽपि त्याज्य एवेति निश्चयः ॥
गुणास्तु श्रुतिमाधुर्यं वर्णे दोषो विपर्ययः ।

इति वर्णविवेकः ।

विभक्त्यन्तं पदं तच्च वाचकं लक्षकं द्विधा ॥
व्यञ्जकं चापरं प्रोक्तं ध्वनिप्रस्थानवेदिभिः ।
यथा संकेतमर्थस्य बोधकं वाचकं मतम् ॥
यौगिकं रूढमित्येतत् द्विधा स्यात्तत्र यौगिकम् ।
यत् प्रकाशयति स्वार्थमङ्गव्युत्पत्त्यपेक्षया ॥

यथा—

चन्द्रे चन्दनसरसे राज्ञि श्रीसिङ्गनामधेये च ।
चरितार्थानि जनानां रूपग्राहीणि करणानि ॥

अत्र चन्द्रचन्दनसरसादिशब्दानामाह्लादयतीत्यादिव्युत्पत्तिपुरस्सरमेवार्थबोधकत्वमिति यौगिकत्वम् ।

रूढं पुनश्चावयवव्युत्पत्तिनिरपेक्षकम् ।

यथा—

दानेन कर्णो दयया दिलीपो नयेन काव्यो विनयेन रामः ।
यदि प्रसिद्धिं[1] दधतामभीभिः श्रीसिङ्गभूपो निखिलैः प्रसिद्धः ॥

अत्र कर्णादीनां शब्दानामवयवव्युत्पत्तिमन्तरेणाप्यर्थबोधकत्वाद्रूढत्वम् ।

---

१. प्रसिद्धम् , ग०

सङ्केतितार्थबाधेन तत्सम्बन्धिनि वस्तुनि ।
व्यापृतं लक्षकं तच्च द्विधा रूढेः प्रयोजनात् ॥

तत्र रूढं लक्षकं यथा—

श्रीसिङ्गक्षितिपाल पालनकलानिष्णातसेवावतां
संशिक्षाकुशलप्रतीतमनसां प्राप्तौ प्रवीणश्रियाम् ।
त्वत्पादद्वयमर्चयन्त्यरिनृपाः कोटीरकोटीगतैः
माणिक्यैर्नव[1]शक्रगोपसुषमाऽहङ्कारसङ्कोचकैः ॥

अत्र निष्णातकुशलप्रवीणशक्रगोपशब्दानां नितरां स्नातः, कुशान् लाति, प्रकृष्टा वीणाऽस्य, शक्रं गोपायतीति मुख्यार्थानामविवक्षया चातुर्येन्द्रगोपकीटलक्षणायाः रूढिरेव मूलम् नान्यत् सहृदयाह्लादकारणं किञ्चिदिति रूढलक्षकत्वम् ।

सप्रयोजनलक्षकं यथा—

श्रीसिङ्गभूपसमये समये भवन्तमास्थानमण्डपगतं जनरञ्जनाय ।
कल्याणहेमकलशैः सममातपत्रैः आन्दोलिकास्सपदि सेवितुमापतन्ति ॥

अत्राचेतनानां[2] हेमकलशाङ्कितछत्राणामान्दोलिकानाञ्च सेवार्थमागमनमसंभावितमिति छत्राधाराः पुरुषाः आन्दोलिकाधेयाः राजानो विद्वांसो वा संलक्ष्यन्ते, अनेन चास्थानमण्डपाङ्गणे छत्रान्दोलिकानामतिबाहुल्यं प्रयोजनतया विवक्षितम्, तेन च नायकमाश्रितानामान्दोलिकाद्यवधयो विभूतय इति च तदिदं प्रयोजनलक्षकम् ।

अमुख्यया मुख्यया वा वृत्त्यार्थे प्रतिपादिते ।
उत्कर्षाय यदन्यार्थद्योतकं व्यञ्जकं हि तत् ॥

यथा—

---

१. नत, ग० । २. अत्र चेतनानाम्, ग० ।

अहो साहित्यसौभाग्यं श्रीसिङ्गधरणीपतेः ।
श्लाघायै यस्य सन्नद्धा वाचो विश्वेश्वरस्य मे ॥

अत्र सरससाहित्यचातुरीविश्रामभूमिरहमिति विशिष्टोऽस्मदर्थोऽर्थान्तरसङ्क्रमितेन मम इति पदेन लक्ष्यते, अनेन साहित्यसहजसौरभं विना नान्यस्मै चमत्कारकारितेति व्यज्यते, सन्नद्धा इति पदेनात्यन्ततिरस्कृतवाच्ये तत्परतया ग्रथिता इति लक्ष्यते, अत्र अनेन च नायकसाहित्यस्य सर्वसाजात्यातिशायित्वं द्योत्यत इति पदव्यञ्जकमेतत् ।

मुख्यया यथा—

सिङ्गप्रभुरलङ्कारी लङ्कारी राघवः पुनः ।
वर्णान्तरत्वमुभयोः श्रूयते सर्वसन्मतम् ॥

वर्णेनाक्षरेणान्तरं भेदो ययोः तत्त्वमिति मुख्यया वृत्त्या वाच्ये प्रतिष्ठिते वर्णो वैश्यजातेरन्तरं नायकरघुनायकयोरिति परस्परव्यतिरेकालङ्कारो वर्णान्तरमिति पदेन व्यज्यत इति पदव्यञ्जकमेतत् ।

यथा वा—

कृतायस्तम्भनिर्भेदो भक्तप्रह्लादपोषकः ।
श्रीपतिर्नरसिंहोऽयं राजते राजशेखरः ॥

कृतो रचितः, अयस्तम्भस्य शुभावहविधिजाड्यस्य निर्भेदो निवारणं येन सः कृतायस्तम्भनिर्भेदः, दैवानुकूल्यसंपादनचतुर इत्यर्थः । भक्तप्रह्लादपोषकः, सेवकसंतोषवर्धनः राजशेखरो भूपालमौलिः नरसिंहः श्रीसिङ्गभूपालो राजत इति प्राकरणिकेऽर्थे प्रतिपादिते योऽयं कृतलोहस्तम्भभेदनस्य प्रह्लादाभिधानभक्तपोषकस्य चन्द्रकलाधारिणो भगवतः श्रीनृसिंहस्य प्रतीतेः तया शब्दशक्तिमूलया नायककण्ठीरवकपटकण्ठीरवयोरुपमालङ्कारध्वनिरनुसन्धीयत इति व्यञ्जकमिदम् ।

## अथ पददोषाः

पदं दुष्टमपभ्रष्टमप्रयुक्तं निरर्थकम् ।
विरुद्धार्थमपुष्टार्थमप्रतीतमनिश्चयम् ॥
क्लिष्टं देश्यं सनेयार्थं प्रतिहस्तमवाचकम् ।
जुगुप्सितमकल्याणं व्रीडाकरमितीरितम् ॥

तत्र श्लिष्टमपभ्रष्टं यथा—

वाग्देव्याः प्रभविष्यता प्रभवता गाढं प्रभूतेन च
श्रेयः पाकभरेण सिङ्गनृपते भावज्ञचूडामणिम् ।
त्वां जेतारमजीजनत् प्रसवि[1]रासर्गस्य नो चेदियं
सत्सेवा विफलायुषां कृतधियां शापेन जीवेत किम् ॥

अत्र जीवेतेत्यात्मनेपदित्वमनुशासनविरुद्धम्, तेन जीवेत् कथमिति साधीयान् पाठः, तदप्यकृतौ गुणः । यथा—

राजा संस्कृतवादिषु प्रणयवानित्याशया गुम्फितं
तद्भृत्यत्र भवामहे पदरजैरेधेम मौलिस्थितैः ।
इत्थं पण्डितमानिनां क्षितिभुजां दुस्संस्कृतं वाचिनां
तैः साकं सुपदीकरोति कृपया श्रीसिङ्गनारायणः ॥

अत्र भृत्यार्थेऽपि असर्वनाम्नो[2] भृत्यशब्दात् त्रल्प्रत्ययः, भवामह इत्यात्मनेपदम्, पदरजैरित्यकारान्तत्वम्, एधेम इति एधतेः परस्मैपदित्वं चापभ्रंशाः । तथाप्यव्युत्पन्नजनवचनानुकरणान्न दोषः ।

अप्रयुक्तं श्लिष्टमपि कविभिर्यदनादृतम् ।

यथा—

---

१. अत्र 'प्रसविता' पाठो युक्तः । २. भृत्यर्थेऽपि सर्वनाम्नः भृत्यशब्दात्, क० ग० ।

पद्मास्त्यक्ता महीपाल मुखलोलुपया श्रिया ।
न चेदेषामलक्ष्मीकैः कुमुदैर्न सहासिका ॥

अत्र वा पुंसि पद्मं नलिनमित्यनुशासनेऽपि कविभिः पुंल्लिङ्गे प्रायेण न प्रयुज्यत इति पद्मा इत्यप्रयुक्तमिदम्, पद्मं त्यक्तमिति प्रथमार्थे,[1] न चेदस्य गतश्रीकैरिति द्वितीयार्थे[2] च पाठो रमणीयः ।

गुणत्वमिष्यते तज्ज्ञैरस्याऽपि यमकादिषु ॥

यथा—

या पङ्क्तिर्ब्राह्मणेन्द्राणामाशास्ते सर्वदैवताः ।
श्रीसिङ्गभूप दधतामाशास्ते सर्वदैवताः ॥

अत्र दैवतशब्दस्य पुंल्लिङ्गे कविभिरनादृतस्याऽपि हेयत्वादत्रास्मिन्यमके प्रयोगो न दुष्टः ।

पादपूरणमात्रं यदविशेषकरञ्च यत् ।
तन्निरर्थकमित्युक्तं पदोपस्कारवेदिभिः ॥

यथा—

कमला कमलापायशङ्किनी शिशिरादिषु ।
अध्यास्ते सर्ववन्द्या वै मुखं श्रीसिङ्गभूपतेः ॥

अत्र वै इति पादपूरणमात्रं श्रियः सर्ववन्द्येति विशेषणं सशङ्कायामध्यासनक्रियायां विशेषेणोपपादयतीति तद्द्वयं निरर्थकम्, अध्यास्ते सर्वदा रम्यमिति द्वितीयार्धपाठो[3] रमणीयः ।

आहुरस्याऽपि सार्थत्वं यमकादिषु सूरयः ।

यथा—

---

१. अत्र 'प्रथमार्धे' इति पाठो युज्यते । २. 'द्वितीयार्धे' पाठः समीचीनः ।
३. तृतीयार्थपाठः, ग० ।

था पङ्क्तिर्ब्राह्मणेन्द्राणामाशास्त इति पूर्वोदाहृतम्, अत्र निरर्थकत्वादेव-कारस्य पादपूरणमात्रत्वेऽपि यमकनिर्वाहकत्वादेव सार्थत्वम्। विरुद्धार्थत्वम्—

विरुद्धार्थं हि तद्यत्र विरुद्धार्थः प्रतीयते ॥
इन्द्राणीनाथभोगोऽयं गुह्यकेशनिभः श्रिया।
राजते पाण्ड्यभूपालो गोपालसमवैभवः ॥
पुरातनकविप्रोक्तः सोऽपि दोषाय नो भवेत्[1]।

यथा—

धनुषि जनकपुत्रीनायकप्रौढिभाजा
विदलितनिजधर्मैः सिङ्गभूपालकेन।
वपुषि कृतरजोभिः चर्मचेलैर्जटालै-
रधिगतमरिभूपैरम्बिकानाथसाम्यम् ॥

अत्र जनकपुत्रीनायको रघुराम इति विवक्षायामपि पितृसुतापतिरिति यद्यपि विरुद्धार्थः, अम्बिकानाथ इत्यत्र च पार्वतीपतिरिति विवक्षायां जननी-पतिरिति प्रतीयते, तथापि न विरोधः। ननु विरुद्धार्थप्रतीतिसाधारण्ये अम्बिका-नाथादीनां गुणत्वम्, इन्द्राणीनाथादीनां दोषत्वमिति कथं व्यवस्थेति केचित्, उच्यते—प्रायिकप्रयोगरूपेण शिष्टानां परिग्रहेणैव, के पुनरत्र शिष्टाः? यत्र प्रथमं मार्गमुपदिशन्ति तत्र त एव शिष्टा इति स्थितिररोचकिनः[2] पुरातनाः कवीन्द्रा एव शिष्टा न पुनस्सतृणाभ्यवहारिणः, अतः 'दिनकरकुलरत्नं जानकीजानिरेषः" इति "तदिति जनकपुत्री शिक्षिता वीक्षिता च[3]" इति, "जनकतनयास्नान-पुण्योदकेषु[4]" इति, "पायाद्वः सोऽम्बिकारमणः[5]" इति, "अम्बिका-

---

१. नाभवत्, ग०। २. इतिस्थितेररोचकेन, क०। ३. राजशेखरस्य बालरामायणे। ४. मेघदूते। ५. काव्यप्रकाशस्य सप्तमोल्लासीयश्लोकांशः।

नितम्बबिम्बस्पर्शलम्पटकराम्बुजा" इति, "तामपाययतपानमम्बिकाम्[1]" इति च महाकविभिरङ्गीकृत्य गुणप्रयोगाः। जनकपुत्रीनायकाम्बिकारमणादीनां गुणत्वं स्वकपोलकल्पितानां पुनः इन्द्राणीनाथादीनाम् आरूढेरसुन्दरत्वमिति सोऽयं सरससाहित्यतीर्थंकरसम्मता घण्टापथः।

यत्तुच्छार्थमिति स्थूलं तदपुष्टार्थमुच्यते ॥

यथा—

ईशानगरिमै[2]श्वर्यप्रतीपैश्वर्ययोग्यताम् ।
भजन्ते रिपुभूपालास्तव श्रीसिङ्गभूपते ॥

अत्र लाघवयोग्यतामिति वक्तव्ये गरिमैश्वर्यप्रतीपैश्वर्यमिति[3] शब्दगौरवम्।

उत्कर्षादिविवक्षायामस्यापि गुणता क्वचित्।

यथा—

नायकस्यैव वंशावल्याम्—

तस्य पादाम्बुजाज्जातो वर्णो विगतकल्मषः।
यस्य सोदरतां प्राप्तं भगीरथतपःफलम् ॥

अत्र गङ्गेत्यर्थे कनीयसी[4] भगीरथतपःफलमिति पदाधिक्यम् तथापि तस्य सगरसुतपावनक्रियासूचकत्वेन गङ्गाशब्दादपि उत्कर्षापादकत्वमिति गुणत्वम्।

वेदशास्त्रैकविख्यातमप्रतीतमिहोच्यते ॥

यथा—

श्रीसिङ्गधरणीपाल भवतः स्फयेन भूयते।
मित्रश्रीराममतुना गर्ववृद्धिकिता द्विषाम् ॥

अत्र स्फयस्य खड्गाकारवस्तुवाचकत्वं वेद एव, मनोर्मन्त्रवाचकत्व-

---

१. कुमारसम्भवे। २. ईशानगतिमैश्वर्य, ख०। ३. नगरीमैश्वर्यमिति, ख०। नगरीमैश्वर्यप्रतीपैश्वर्यमिति, ग०। ।४. 'कनीयसि' पाठोऽत्र युक्तः।

मागम एव, कितो वृद्धिनिरासकत्वं शब्दशास्त्र एव प्रसिद्धमिति तदप्रतीतम् ।

तद्विद्याक्रमनिर्वाहप्रवृत्तौ तदिदं गुणः ।

यथा—

ईडापिङ्गलयोः पिधाय वदनं बध्वा त्रिशृङ्गाटिकां
सौषुम्नोपरि सङ्क्रमय्य मरुतः षड्ग्रन्थिगन्धच्छिदः ।
प्रत्यग्ज्योतिषरोचिषा प्रसरता संद्राव्य चान्द्रीं कलां
तन्निष्ठ्यूतपरामृतैः परिचितो योगी चिरञ्जीवति ॥

अत्र ईडापिङ्गलादीनां योगशास्त्रमात्रप्रसिद्धत्वादप्रतीतत्वेऽपि अभ्यासयोगप्रकारस्य सर्वतो निर्वाहाद् गुणत्वम् ।

अनिश्चितं तद्यत्र स्यादनुत्कर्षाय संशयः ॥

यथा—

श्रीसिङ्गभूपपादाब्जसेवाहेवाकगर्वितः ।
सामन्तराजसन्तानो धात्रीभोगाय कल्पकृत् ॥

अत्र उपमाता धात्री धरित्री वा धात्रीति संशयप्रतीतेरिदमनिश्चितम्, भूमिभोगायेति पाठो[1] रमणीयः ।

इदं प्रकरणादिभ्यो विशेषावगमेऽपि च ।
उत्कर्षे वा विरोधे च दोषकक्ष्यां न गाहते ॥

यथा—

रेचर्लान्वयमौलिमण्डनमणे श्रीसिङ्गभूपालक
त्वत्खड्गस्य घनद्युतेः स महिमा लोके कथं वर्ण्यते ।
यस्मिन् कम्पितमात्र एव समिति क्षोणीभृतां मण्डलं
सान्तत्येन विमानवर्तनकथामाप्नोति मित्रैः समम् ॥

---

१. पादो रमणीयः, ख० ।

अत्र घनद्युतेरित्यस्य घना सान्द्रा द्युतिरस्येति घनस्य मेघस्येव द्युतिरस्येति वा संशयेऽप्यविरोधान्न दुष्टत्वम्, विमानवर्तनकथामित्यत्र विगताभिमानवर्तनस्य व्योमयानवर्तनस्य वेति संशयेऽप्यत्यन्तोत्कर्षान्न दोषः, क्षोणीभृतामित्यत्र राज्ञां गिरीणां वेति संशये नायकखड्गवर्णनप्रकरणात्, प्रतिराजलक्षणविशेषावगमान्न दोषः। एवं संयोगविप्रयोगादिभिरपि विशेषावगमे द्रष्टव्यम्।

दूरदूरो भवेद्यस्मादर्थः क्लिष्टं तदुच्यते।

यथा—

वाराशिमित्रजनकप्रभवासहायकेयूरवेतनकयानविलोचनानाम् ।
श्रीसिङ्गभूवरविरोधिनृपाङ्गनानां वन्यस्थली समभवन्निजराजधानी॥

अत्र वाराशिमित्रं मैनाकः तस्य जनकः हिमवान् तत्प्रभवा पार्वती तत्सहायो महेश्वरः तत्केयूराणि सर्पाः तेषां वेतनकं जीवनकारणं वायुः तस्य यानं वाहनं मृगः तस्य लोचने इव लोचने यासां ताः इति अतिव्यवहितार्थत्वात् क्लिष्टमिदम्।

प्रक्रमस्य च निर्वाहे महतां दैन्यसूचने॥
प्रयुक्तस्य क्वचित्काव्ये क्लिष्टस्य गुणता भवेत्।

प्रक्रमनिर्वाहे[1] यथा—

श्रीसिङ्गनृपो विभवे धनुषि नये वपुषि रञ्जने जिष्णुम्।
तत्पुत्रं तन्मित्रं तत्पुत्रं जयति तन्मित्रम्॥

विभवे जिष्णुं देवेन्द्रं धनुषि तत्पुत्रं देवेन्द्रपुत्रम् अर्जुनं नये देवेन्द्रपुत्रमित्रं वासुदेवं वपुषि देवेन्द्रपुत्रमित्रपुत्रं प्रद्युम्नं रञ्जने देवेन्द्रपुत्रमित्रपुत्रमित्रं चन्द्रमिति व्यवधानात् दुर्वितर्कप्रत्ययमपि तच्छब्दप्रक्रमनिर्वाहाद् गुणत्वम्।

महापुरुषदैन्यसूचने यथा—

---

१. प्रक्रमनिर्वाहो, ख०।

श्रीभर्तुरायतसुवर्णकराकृतेर्यद्दंशास्तदायतसुवर्णकरा द्विषस्ते ।
श्रीसिङ्गभूप नगरार्गलदीर्घबाहो तत्त्वेऽप्यनायतसुवर्णकरोऽसि चित्रम् ॥

अत्र आयतो दीर्घभूतः सुवर्णः सुकारो यस्येति आयतसुवर्णः तादृशः करशब्दो यस्य सः आयतसुवर्णकरः सूकर इत्यर्थः । आयतसुवर्णकराकृतिः सूकराकृतिरिति विष्णोः तिर्यक्त्वकथनभयेन वक्त्रादूरार्थप्रत्ययशब्दः प्रयुक्त इति गुणत्वम् ।

हठार्थप्रतीत्या च यथा—

शम्भोः स्थिता भूषणपेटिकायां श्रियः सपत्नीमभितः स्फुरन्ती ।[1]
विष्णोः पदं मध्यममाविशन्ती विराजते सिङ्गनृपालकीर्तिः ॥

अत्र शम्भुभूषणपेटिकापातालं श्रीसपत्नीभूमिः मध्यमविष्णुपदमाकाशमिति नातिदुर्बोधत्वादक्लेशकरमिति गुणत्वम् ।

देशप्रसिद्धं व्युत्पत्तिरहितं देश्यमुच्यते ॥

यथा—

पेकापरीतकमनीयनितम्बविम्बा हालामदद्विगुणपाटलगण्डरेखा ।
श्रीसिङ्गभूप भवतो मृगयाविहारे का वाऽनुयाति यवनी परिचारिकेव ॥

अत्र पेकापरिधानभस्त्रा हला मदिरा इमे देश्ये । ननु

भस्त्रापेटिकयोः साम्यात् पेटिका मध्यलोपिनी ।
पेका हला च हलिनः प्रिया देश्या नहीति चेत् ॥
कन्दादुट्टीकत इति कन्दाट्टादेरदेश्यता ।
इत्थं निरुक्तनिर्वाहादामर्यादा प्रशस्यते ॥
तदिदं मार्गसंक्षोभप्रज्ञाकण्डूतिरुज्झ्यताम् ।
अङ्कोपलम्भनामादौ न देश्यं दूषणं भवेत् ॥

अङ्को विरुदम् तत्र यथा—

---

१. स्फुरन्ति, क० ग० । २. देशम्, ग० ।

चलमर्ति[१] गण्डविरुदो जयति प्रतिगण्डभैरवो राजा।
सोमकुलपरशुरामः पाण्ड्यविभालो ह्यगायि गोपालः[२] ॥

तत्र चलमर्तिगण्डादीनां देश्यत्वे विरुदत्वाद् गुणत्वम् ॥

उपालम्भे यथा—

किं दारुणा कोङ्करवं करेण किं वाससा चीं गिरिमां गिरेण।
श्रीसिङ्गभूपालविलोकनाय वैदुष्यमेकं सुधियां सहायः ॥

अत्र कोंकरवं करेणेति पदं[३] देश्यं तादृशेन दारुणा आन्दोलिकयेत्यर्थः, नानावर्णविचित्रे चीं गिरिमां गिरेणेति पदं देश्यं तादृशेन वाससा किं पट्टांशुकेनेत्यर्थः। अत्र कश्चिदा[४]न्दोलिकापट्टाम्बराद्याडम्बरमतिव्ययेन सम्पाद्य नानादिगन्तेषु राज[५]स्थानानि विगाह्य तद्व्ययमात्रमप्यलभमानः ऋणाधिकतया क्लिश्यन् आडम्बरं विनापि नायकमालोक्य तत्करुणाकटाक्षसमग्रीभूत[६] नानावैभवस्सन् कस्मैचिदाडम्बररहितेन भवता कथं सपदि बृशी संपादितेति पृच्छते जनाय केवलं व्ययकारिणां दोलिका[७]पट्टपटादिबाह्याडम्बरविडम्बनापुरस्सरमुत्तरं वदति, तदत्र कोंकरवं करादेरुपालम्भनत्वाद्देश्यत्वेऽपि सुन्दरत्वम् ॥

नाम्नि यथा—नायकस्यैव वंशावल्याम्—

तयोरभूवन् क्षितिकल्पवृक्षाः पुत्रास्त्रयस्त्रासितवैरिवीराः।
सिङ्गप्रभुर्वेन्नमनायकश्च वीराग्रणीरेचमहीपतिश्च ॥

अत्र सिङ्गयवेन्नमरेचयशब्दानामव्युत्पत्तिमत्वाद्देश्यत्वेऽपि नामपदत्वाददुष्टपदत्वम्।

आत्मना क्लिष्ट[८]संकेतं नेयार्थमिति गीयते।

---

१. चलमति, ख०। २. गोवालः, ग०। ३. दूषणं पदम्, क०। ४. कश्चित्, ख०। ५. राजा, क०। ६. सामग्रीधूत, ख०। ७. व्ययकारिणाम् आन्दोलिका, क०। व्ययकरणान्दोलिका, ख०। ८. क्लृप्त, ख०। क्लिप्त, क०।

यथा—

व्यत्यस्तपात्ररहिता मेदिनीपालशात्रवाः ।
लीयन्ते हन्त कान्तारे व्यावृत्तपिकसङ्कुले ॥

अत्र पात्रशब्दो वर्णप्रातिलोम्येन त्रपां वदति तथैव व्यावृत्तः पिकः कपिरिति स्वसङ्केतितत्वान्नेयत्वम् ।

प्रहेलिकादौ प्रायस्तदभ्यनुज्ञायते बुधैः ॥

यथा—

योगिनां भोगिनां किं स्यादिष्टमेतन्न वेत्ति यः ।
विपरीतो हरस्तेन न ज्ञातो मेदिनीपते ॥

अत्र योगिनां भोगिनां च किं प्रियमिति प्रश्ने रह इत्युत्तरे वक्तव्ये विपरीतो हर इत्युक्तम्, तस्य स्वसङ्केतितत्वेऽपि प्रहेलिकात्वाददुष्टत्वम् ।

स्वपर्यायपदज्ञानसाधनं प्रतिहस्तकम् ।

यथा—

श्यामदंष्ट्राकरालेन करवालेन खण्डिताः ।
त्वया श्रीसिङ्गभूपाल कर्पूरेण विरोधिनः ॥

अत्र श्यामशब्दः स्वपर्यायकालशब्दं ज्ञापयति, तेन यमः कर्पूरशब्दश्च स्वपर्यायं घनसारं ज्ञापयति, तेन अधिकसार इति लभ्यते । ततः श्यामकर्पूरशब्दयोः स्वपर्यायकालघनसारशब्दमात्रज्ञापकत्वात् प्रतिहस्तत्वम् ।

गूढलेखादिषु प्रायो नैतच्चारुत्वमुज्झति ॥

यथा—

हरिद्रायां राहुप्रसरपिहितेच्छापरिषदि
प्रयुक्तालङ्कृत्यै वियुतगरुतां दुर्गकुजरीम्

यवं[1] सार्कान्वीताः प्रहर इति सेनापतिकृता-
नमात्येभ्यो लेखान् प्रथयति च सिङ्गक्षितिपतिः ॥

अत्र हरिद्रा निशा रात्रिरिति यावत्, राहुस्तमः ध्वान्तमिति यावत्, इच्छा आशा दिक् प्रयुक्तालङ्कृतिः प्रहारः वियुतगरुतां विपक्षाणां कुजरीं नगरीं सार्का सेना चमूः प्रहरः यामः गच्छामः । एवं हरिद्रादीनां स्वपर्यायमात्रबोधकत्वेन प्रतिहस्तत्वेऽपि सेनापतिभिरभियाति दुर्गोच्छित्तये गतैस्तदालोचितकार्यं वयं सेनान्वीतास्तिमिरपिहितदशदिशि निशायां प्रहाराय विपक्षाणां दुर्गनगरीं याम इत्येवं लक्षणं मन्त्रभेदभयात् गूढलेखमुखेन राज्ञि प्रेषितमिति न दुष्टत्वम् ।

असमर्थं योगमात्रप्रयुक्तत्वादवाचकम् ।

यथा—

मेदिनीरमणास्थानप्राङ्गणे वारवासिनः ।
वाजिनो मञ्जु वाशन्ते शिञ्जन्ते मत्तकुञ्जराः ॥

अत्र तिरश्चां रुतं[2] वाशितम् भूषणशब्दः शिञ्जितमिति मर्यादायाम्, वाश्ट शब्दकुत्सायाम् शिज्[3] अव्यक्ते शब्द इति च योगमात्रेण प्रयुक्तौ वाशितशिञ्जितशब्दौ हेषाबृंहितयोरवाचकौ ।

अस्याऽपि गुणता ग्राह्या[4] तच्छास्त्रस्वीकृतादिषु ॥

यथा—

श्रीसिङ्गभूमिरमणे भरितप्रतापे नान्ये स्फुरन्ति रणसीमनि राजलोकाः ।
किं वा स्फुरन्ति रटितस्पृशि पाञ्चजन्ये लीलानुकारि तरुणीजनकूजितानि ॥

अत्र कामिनीनां रतान्तरेषु कामशास्त्रकारैः हंसतित्तिरिलावकादिरुतविकाराम्नानात् पक्षिणो रुतादन्यत्र अवाचकस्याऽपि कूजितस्य समर्थत्वम् ।

---

१. वयं, क० । नयं, ख० । २. मखम्, ग० । ३. शिजि, ख० । ४. ग्राह्यम्, क० ।

चित्तं जुगुप्सते यस्मात् तज्जुगुप्सितकं त्रिधा ।
हेयार्थं हेयार्थान्तरं हेयार्थस्मृतिहेतुकम् ॥

हेयार्थं यथा—

निस्संस्कारमुखा दृशां ततदरीनिर्यन्महादूषिका-
पूत्युद्गारभरानुभूतिसयुजा दीक्षामिषात्कारया[1] ।
हेयादन्तरदन्तनैष्ठिकतया सीदन्ति दुर्गाङ्गणे
कल्याणक्षितिपप्रतीपसरणीसञ्चारिणो वैरिणः ॥

अत्र दूषिकापूत्यादीनां साक्षात् जुगुप्सार्थत्वेन हेयार्थत्वम् ।

हेयार्थान्तरत्वं यथा—

करोपलालितविशामाशान्ता गूढवर्चसाम् ।
द्विषामकालराहुस्ते खङ्गः कल्याणभूपते ॥

अत्र विड्गूढवर्चश्शब्दयोः प्रजातेजोलक्षणार्थवन्मलार्थस्यापि वाचकत्वेन जुगुप्सार्थान्तरत्वम् ।

हेयस्मृतिहेतुकं यथा—

पूयन्ते पृतनोद्धूतरजोरञ्जितविग्रहाः ।
कल्याणखड्गधारायां मज्जनेन विरोधिनः ॥

अत्र पूयन्ते मज्जनेनेति अनयोर्वर्णसारूप्यभ्रमेण पूयमज्जार्थकर्णेजपत्वात् जुगुप्सार्थस्मारकत्वम् ।

एषां ग्राह्यो गुणीभावः क्वचिदङ्गीकृतादिषु ।

यथा—

पल्लवकोमलपाणितलानामुन्नतमांसलवक्षसिजानाम् ।
मानसमुत्तममानवतीनां रक्ततरं त्वयि सिङ्गनृपाल ॥

---

१. नार्घया, क० । नारया, ग० ।

अत्र मांसरक्तकोमलशब्दानां जुगुप्सार्थतदर्थान्तरतत्सूचकत्वे जुगुप्सितत्वेऽपि महाकविभिरङ्गीकृतत्वात् गुणत्वम् ।

**अमङ्गलमकल्याणं तज्जुगुप्सितवत् त्रिधा ॥**

अमङ्गलार्थं यथा—

**श्रीसिङ्गभूपालजयप्रयाणसन्नाहनिस्साणधणं क्रियाभिः ।**
**सद्यः परिस्फोटितसन्धिबन्धाः परिम्रियन्ते परिपन्थिभूपाः ॥**

अत्र परिम्रियन्त इति साक्षादमङ्गलम् । निद्रान्ति दीर्घं परिपन्थिभूपा इति पाठो रमणीयः ।

अमङ्गलार्थान्तरं यथा—

**श्रीसिङ्गभूपालचमूसमूहसन्नाहसन्नाहवसंभ्रमाणाम् ।**
**सन्तिष्ठमानैः पुरतो रिपूणां कृतानि योधैः स्वविकत्थनानि ॥**

अत्र सन्तिष्ठमानैरित्यनेन सम्यक् स्थितिरिव मरणमपि प्रतीयते, उत्तिष्ठमानैरिति पाठो रमणीयः ।

अमङ्गलस्मरणहेतुर्यथा—

**कात्यायनसुतोद्देशबलिरक्षितकुक्षयः ।**
**भवन्ति मेदिनीनाथमनमन्तो नरेश्वराः ॥**

अत्र कुक्षय इति पदे अत्यन्तवर्णद्वयेनामङ्गलार्थस्मरणम् ।

एषां गुप्तादिषु प्रायोगुणपाठोऽपि गण्यते ।

**योनिर्यस्य द्रुहिणचरणो जन्म भूम्यां नृपाणां**
**ब्रह्माण्डेशे भगवति परं केशवे भक्तिभाजाम् ।**
**कृत्याकृत्यस्फुरणहरणे शिक्षितो येन सोऽयं**
**शत्रुच्छेदव्यसनकुशलो भाति रेचर्लवंश्यः ॥**

अत्रोच्छेदस्य साक्षादमङ्गलार्थत्वेऽपि शत्रुपदेन गुप्तत्वात् गुणत्वम् ।

कृत्येत्यस्यामङ्गलार्थत्वेऽपि कृत्याकृत्ये कार्याकार्ये इति साहचर्येण गुप्तत्वम् । केशव इत्यस्य अन्त्यवर्णद्वयेनामङ्गलार्थस्मरणहेतुत्वेऽपि भगवन्माहात्म्येन गुप्तत्वमित्यमीषां गुप्तत्वम् ।

**व्रीडाकरमसभ्यं स्यात् पूर्ववत्तदपि त्रिधा ॥**

अत्रासभ्यं यथा—

**वंशाः सहस्रं सन्त्वन्ये शिश्नोदरपरायणाः ।**
**एको रेचर्लवंश्योऽयं साधुरक्षापरायणः ।**

अत्र शिपूर्वशनं साक्षादसभ्यार्थम्, निजोदरेति पाठो रमणीयः ।

असभ्यार्थान्तरं यथा—

**सिङ्गभूवरवरूथिनीधुनीरंहसा दलितमूलशक्तयः ।**
**यान्ति केऽपि यमपालितां द्विषो गुह्यकेशकलितां दिशां परे[1] ॥**

अत्र गुह्यकेशशब्दः कुबेरमिव कुत्सितकेशार्थमपि व्यनक्तीत्यस्यासभ्यार्थान्तरत्वम्, यक्षराजकलितामिति पाठो रमणीयः ।

असभ्यार्थस्मारकं यथा—

**श्रीसिङ्गभूपालपदारविन्दसेवाप्रसादीकृतराज्यभोगाः ।**
**क्रीडन्ति सामन्तनृपा वनान्ते शेफालिकाचञ्चलचञ्चरीके ॥**

अत्र शेफालिकापदस्य प्रथमवर्णयुगलस्यासभ्यार्थस्मृतिहेतुत्वम्, वासन्तिकाचञ्चलेति पाठो रमणीयः ।

**अमीषाञ्च गुणीभावो लक्षितादिषु लक्ष्यते ।**

यथा—

**योनिर्यस्य द्रुहिणचरण** इति पूर्वस्मिन्नुदाहरणे योनिरित्यसभ्यार्थत्वेऽपि योनिरेव योनिरिति गौणवृत्त्या न दुष्टत्वम्, जन्मभूमिभगवच्छब्दयोरस-

---

१. दिशांपते, ग० ।

भ्यार्थान्तरत्वेऽपि लोकसंवीतत्वाद् गुणत्वम् । ब्रह्माण्डेत्यस्य च उत्तरवर्णद्वयेनासभ्यार्थस्मृतिहेतुत्वेऽपि अण्डमिवाण्डमिति गौणवृत्त्या गुप्तत्वात् गुणत्वम् ।

न वाक्यमेषां[1] सर्वेषां हेयार्थत्वादिसाम्यतः ॥
गुणत्वमगुणत्वं वा केवलं तर्ककर्कशैः ।
परस्यैव परान्यत्वमाप्तवान् गुणमानयोः ॥
सचमत्कारसाहित्यब्रह्मसाक्षात्क्रियोचितैः ।
अनुज्ञातं बुधैः कैश्चित् कुमारीकमलादिकम् ॥
नैवं श्रविष्ठासंस्थानशिपूर्वश्नादिकं पुरा ।
यैः कैश्चित्प्राक्तनी सीमा[2] न लंघ्या कोविदैरपि ॥
तदुक्तेनैव मार्गेण गुणदोषान् परामृशन् ।
काव्यं कल्पान्तरस्थायि कल्पयेदनुपप्लवम् ॥

इति सरससाहित्यचातुरीधुरीणश्रीविश्वेश्वरकविचन्द्रप्रणीतायां
श्रीसिङ्गभूपालकीर्तिसुधासारशीतलायां चमत्कार-
चन्द्रिकायां वर्णपदविवेको नाम
प्रथमो विलासः ।

---

१. अत्र 'वाच्यम्' इति पाठो युज्यते । २. यैः कैः प्राक्तनिसीमा, क० । यैः कैश्चित्प्रोक्तसीमा, ख० । यैः कैश्चित्कृतीः प्रोक्तसीमा. ग० ।

# Sangamani

**Sanskrit Quarterly Magazine**

•

Edited by

**Prabhat Shastri, Sahityacharya**

•

Annual Subscription

Rs. Twelve only

Rs. 3/50 per copy

[ IN FOREIGN ]

Published by Prabhat Shastri for Sanskrit Sahitya Parishad, Daraganj, Allahabad-6 ( India ) and Printed by him at Kamal Mudranalaya, 370 Rani Mandi, Allahabad-3 ( India )

प्रथम बार प्रकाशित

साहित्यदर्पण के रचयिता

कविराज विश्वनाथ कृत

# चन्द्रकला नाटिका

श्री प्रभात शास्त्री द्वारा सुसम्पादित एवं श्री शिवशङ्कर शास्त्री द्वारा हिन्दी में अनूदित होकर प्रकाशित हो गयी है। पुस्तकालयों तथा संस्कृत-प्रेमियों के लिए अनुपम संग्रहणीय पुस्तक। मूल्य—चार रुपये।

सीमित प्रतियाँ। अपनी प्रति सुरक्षित करायें।

प्राप्ति-स्थान :

**कौशाम्बी प्रकाशन, दारागंज, इलाहाबाद—६**

●

Published for the first time

**CHANDRAKALĀ NĀTIKA**

By Kaviraja VISHWANATHA

the famous author of SĀHITYADARPANA

Edited critically by Pandit Prabhat Shastri and translated into Hindi by Shiva Shanker Shastri. A unique and rare work for libraries and lovers of Sanskrit. Only a few copies have been printed, so copies must be booked immediately.

To be had of

KAUSHAMBI PRAKASHAN,

DARAGANJ, ALLAHABAD-6 [ INDIA ]

## सम्पादन-समज्या

श्री बालकृष्णरावः ( प्रयागः ) • डॉ० हरवंश लाल शर्मा (अलीगढ़ः)

डॉ० विद्यानिवास मिश्रः ( गोरखपुरम् )

•

**लक्ष्यं योजना च**

- इयं 'संगमनी' संस्कृतस्य निःस्वार्थसेवाया नामान्तरम् ।
- संस्कृत वाङ्मयविषये गवेषणापूर्णलेखानां परिचर्चायाश्च प्रकाशनम् ।
- संस्कृतभाषाया अप्रकाशितग्रन्थस्य मुद्रणम् ।
- संस्कृतवाङ्मयस्य संस्कृतभाषायाश्च प्रचाराय प्रसाराय च प्रयत्नः ।

# संगमनी

●

**संस्कृत-त्रैमासिकी**

प्रथमवर्षे द्वितीयोऽङ्कः

वर्षर्तुः, २०२२ विक्रमाब्दः

●


सम्पादकः

*प्रभात शास्त्री*

सहसम्पादकौ

*तारिणीश झाः*
व्याकरणवेदान्ताचार्यः

*जयशङ्कर त्रिपाठी*
साहित्याचार्यः, एम्० ए०


●


प्रयागस्थ-*संस्कृत-साहित्य-परिषदः* प्रकाशनम्

कार्यालयः
*संगमनी*
दारागंजः—प्रयागः

वार्षिकं मूल्यम्
५·०० रु०
प्रत्यङ्कम् १·५० रु०

# वर्षा-अङ्कः



●

# संगमनी

'अहं राष्ट्री संगमनी वसूनाम्'

—ऋग्वेदे १०।१२५।३

१ वर्षे संवत् २०२२ वि०, वर्षर्तुः २ अङ्कः


## भवतु प्रीत्यै

•

विद्युत्पङ्कजषण्डपङ्क्तपटली-

व्योमस्थलीशाद्वलः

केदारः कलमाङ्कुरप्रतिभुवां

धारातलानामयम् ।

शैवालावलिरद्रिमूर्ध्निसरितां

सूर्येन्दुकारागृहं

कन्दर्पोत्सववैजयन्ति भवतु

प्रीत्यै तवाम्भोधरः ॥

—बिल्हणस्य

# शुभाशंसा:

●

श्रीमद्भिः प्रभातशास्त्रिमहाभागैः सुसम्पादितायाः संगमनीपत्रिकायाः प्रवेशाङ्कं निभालयतो मम नितान्तमानन्दतुन्दिलं मानसं सम्प्रति वर्त्तते । अत्राङ्के प्रकाशिताः सर्वं एव निबन्धा रोचका ज्ञानवर्धकाश्चेति । अद्यत्वे ऽप्रकाशितचरीयं 'चमत्कार-चन्द्रिका' साहित्यरसिकानां मुदमाधास्यतीति । संस्कृतभाषायाः प्रचाराय संस्कृत-साहित्यस्य च वर्धनाय संस्कृतत्रैमासिकीयं निश्चयेन कल्पताम् इति कामयते ।

—(आचार्यः) बलदेव उपाध्यायः, वाराणसी

समागता 'संगमनी' समुज्ज्वला
प्रयागगङ्गाशुचिसीकरार्चिता ।
हिताय लोकस्य भवेद्धि भारते
गीर्वाणवाग्वैभवमण्डितेयम् ॥

—(पद्मभूषणः) सूर्यनारायण व्यासः, उज्जयिनी

समवाप्य ह्वि 'संगमनी' मवनीमक्षर-सरस्वत्याः ।
सुवनीमहं प्रविष्टो द्राक्षादीक्षातिदक्षलतिकानाम् ॥

—आनन्द झाः, लखनऊ विश्वविद्यालयः

उल्लासो मे समजनि सर्वात्मनाद्य समीक्ष्य संगमनीम् ।
सर्वाङ्गसुन्दरीयं सचेतसां भवतु तोषाय ॥

—चन्द्रशेखर शास्त्री, कानपुरम्

'संगमनी' यथासमयं समधिगता । दिष्ट्या वर्धते भवान् । अस्यां ग्रथिता सकलापि सामग्री वैदुष्यपूर्णा अनुसन्धानसनाथा च । प्रयागतः समुत्थिता एषा 'संगमनी' सुरसरस्वती सततं संगमयतु सचेतसां चेतांसि । उत्तरोत्तरं प्रगतिपथं चारोहतु भवतोऽयमभिनवः सत्प्रयासः ।

—कालूरामव्यासः, जोधपुरम्

भवद्भिः प्रेषितां त्रैमासिकीं 'संगमनी' नाम्नीं पत्रिकां समासाद्य प्रत्यक्षरमाद्योपान्तमधीत्यास्याः पवित्रमुद्देश्यं रुचिरां योजनाञ्चावगत्य महान्तमानन्दमनुभवन् सफलतां समुन्नतिञ्चैतदीयां कामयते ।

—अमृतलाल जैनः, वाराणसी

अनया संस्कृतसमाजस्य महानुपकारो भविष्यतीति सुनिश्चितम् । अनया संस्कृतविदुषां विचारविनिमयद्वारा वस्तुतः संस्कृतभाषायाः साहित्यस्य च प्रचारः प्रसारश्चेति भवेत् । पत्रिकेयमुत्तरोत्तरमुन्नतिपथमधिगच्छेदित्यनया कामनया सह विरमामि ।

—वलूनीत्युपाह्वो नारायणप्रसादः, मेरठः

सुरभारतीसमुन्नत्यवगामिनी हृद्यगद्यानवद्यपद्यचारुविचारसंगमनीं भवत्सम्पादितां 'संगमनीं' समवगाह्य परा निर्वृत्तिः समासादिता ।

—मुरारिदत्तचतुर्वेदः, लखनऊः

सन्देशवाहिनीमित्थं प्राप्य संगमनीमिमाम् ।
नितरां प्रमुदितो मित्र ! सदैवास्मीति निश्चितम् ॥

—मातारूपमिश्रः, जेरा-प्रयागः

मिलिता 'संगमनी' नाम्नी त्रैमासिकी संस्कृतपत्रिका । नितान्तं प्रसीदामः । पत्रिकायाः समस्ता सामग्री सुरुचिसम्पन्ना समुपादेया सहृदयजनमनांसि समाहर्तुं क्षमा च । अस्याः पत्रिकाया लेखकाः सम्पादकाः प्रकाशकाश्च सर्वे एव स्वकृतौ सफला धन्यवादार्हाश्चेति ।

—डा० गयाप्रसाद शास्त्री, हैदराबादः

गीर्वाणवाणीप्रसाराय तत्रभवतामयमुद्योगो ऽतीव प्रशंसार्हो विद्यते । आशासे चेयं 'संगमनी' पत्रिका सुरभारतीप्रसाराय भारतीयसंस्कृतेः पुनरुद्धाराय च बद्धपरिकरा भविष्यतीति ।

—युधिष्ठिरमीमांसकः, अजमेरः

नूनमेव 'संगमनी' संस्कृतज्ञानराशेः विकासाय उपकारिणी भविष्यति। प्रवेशाङ्कसर्वलेखाः भाषासाहित्यविमर्शसंयुक्ताः। एतत्सम्पादकमण्डलाय अहं वर्धापकं समर्पयामि।

—डा० अम्बाप्रसादः एम० ए०, डी० लिट्०, मद्रासः

अधीत्य 'संगमनी' चेतसि महान् प्रमोदो जातः। अस्माकमेष दृढो विश्वासो यदनया संस्कृतवाङ्मयस्य भूयान् प्रचारः प्रसारश्च भविष्यति।

—कपिलदेवपाण्डेयः, प्रयागः

एषा सङ्गमनी भविष्यति चिरं गीर्वाणवाणीजुषां
वृद्धयर्थं शशिनः प्रभेव जलधेर्ज्ञानस्य निःसंशयम्।
अस्या अभ्युदयाय सैष विनयेनाभ्यर्थ्यते ऽनारतम्
गोगोपीजनवल्लभो व्रजपतेः सूनुर्मुकुन्दः प्रभुः॥

—वनमाली शास्त्री चतुर्वेदी, मथुरा

संगमनीं प्राप्य प्रमुदितमानसोऽहम्। श्रेयानयम् प्रयासः। अनया संस्कृतवाङ्मयस्यानुशीलने संस्कृतलोकस्य स्वाभाविकी प्रवृत्तिर्भविष्यति, इति अनुमीयते।

—डा० छविनाथ त्रिपाठी, कुरुक्षेत्रम्

कालचक्रकलितकलनयाऽतिशिथिलितकलेवरायाः गीर्वाणवाण्याः समुत्थापनोद्देश्येन सम्पादितायाः विविधगुणविलसितायाः संगमन्याः पत्रिकायाश्चिरायुष्यं प्रसाराधिक्यं च भगवन्तम्भूतिप्रदातारम्महेश्वरं विश्वम्भरञ्च प्रार्थये।

—यज्ञदत्तद्विवेदी, बम्हनी-प्रयागः

अत्र प्रकाशिता लेखा विषयाश्च संस्कृतज्ञेभ्यः सुबहुलं समाचारं सन्देशं च ददति। विशेषतश्च 'चमत्कारचन्द्रिका' प्रकाशनमस्माकमान्ध्राणामतीवगर्वकारणम्। तत्रत्यास्सर्वेऽपि विषयास्सम्यक् पठिता मया। स्वलङ्कृतं मे मनः तैरपूर्वदृष्टैर्विषयैः।

—के० लक्ष्मणशास्त्री, हैदराबादः (आन्ध्रः)

# आगतपत्राणि समीक्षणानि च

●

सिंहलद्वीपवर्तिविद्यालङ्कारविश्वविद्यालयस्य दिनांक : १६-७-६५
संस्कृतविभागाध्यक्षाणां
*शान्तिभिक्षुशास्त्रिणाम्*

स्वस्ति । श्रीमते प्रभातशास्त्रिणे नमः ।

संगमनी विलोकिता न केवलं मया किन्तु संस्कृतविभागेऽपरैरपि । भारतादाविर्भवन्ति नैका. पत्रिकाः । सांप्रतं वर्तते प्रसादगुणसमन्वितानां चूर्णकगद्येन समासरहितेन मध्यमसमासवता वा पद्येन सर्वथैव शब्दच्युतिरहितेन मार्गेण च लिखितानां काव्यनाटकाख्यानाख्यायिकावर्णनविवेचनपरनिबन्धानामावश्यकता । संगमन्यां कृतोऽत्र कश्चन यत्नः । मन्ये क्रमेणेयं लोकरुचीनामनुधावनेन वर्धयिष्यति यत्नमेतादृशं भविष्यति च सर्वजनप्रिया । इति

सिंहलेषु विद्यालङ्कारविश्वविद्यालयस्य
संस्कृतविभागस्याध्यापक-महारामग्रामवास्तव्य-
*भदन्तरत्नसारभिक्षुमहोदयानाम्*—

प्रियसंस्कृताः सिंहलदेशीयाः । अतः संस्कृताध्ययनस्य सुकरोपायभूतः कीदृशोऽपि प्रयत्नस्तैरभिनन्द्यत इति कृत्वा संगमन्या अभिनन्दनमत्र देशे निःशङ्कमेव । नामास्याः पत्रिकाया अर्थपूर्णं महत्त्वं भजते ।

प्रवेशाङ्केऽस्मिन् कौतुकावहा निबन्धा दृश्यन्ते । 'नागरमक्षरमथवा नागरी लिपिरिति' निबन्धो यद्यपि लघुकायस्तथापि विचारपूर्णः । नागराक्षराणां नागरनाम्नः सम्भवविषये प्रस्तुतं मतं विद्वज्जन—प्रसादाय वर्तते । चौर्यशास्त्रविषयको

निबन्धो महता प्रयासेनानुसन्धानपूर्वकं लिखितोऽस्ति। पाठकानां कौतुकावहेऽस्मिन्निबन्धे चौर्यशास्त्राध्ययनोपदेशः खलु कदाचिद्दैववशात् संस्कृतज्ञानां चौरत्वापादकोऽपि भवेत्। धर्मचौर्यरसायनग्रन्थस्यात्रोल्लेखो न दृश्यते। कालिदासस्य हिमालयकवित्वापादको निबन्धः प्रतिज्ञां पर्याप्तरूपेण न समर्थयतीति मन्ये। 'आत्मज्ञानविमर्शः' खलु श्रद्धालूनामेव मनो हरेत् नापि वा, न त्वेवान्येषाम्। 'बौधायनभाष्यपाठविमर्शो' यद्यपि बुद्धिगोचरस्तथापि तादृशस्य नीरसस्य विषयस्य पत्रिकायाः प्रारम्भस्थल एव प्रक्षेपः पाठकानां खेदाय भवति।

'चमत्कारचन्द्रिकाया' अत्र प्रकाशो नात्यन्तमुपयोगी। अव्युत्पन्नै रदुरवगाहस्यानन्तस्य च संस्कृतवाङ्मयोदधेः सारभूतानां विविधानां रत्नानां प्रकटीकरणरूपेण लिख्यमाना अनतिदीर्घा बुद्धिप्रबोधका निबन्धा एव केवलं पाठकानां लाभाय प्रमोदाय च वर्तन्ते, न तु पूर्णा ग्रन्थाः। न केवलं व्युत्पन्नानां परमव्युत्पन्नानामपि बालानां कृतेऽप्यत्रैकांशो दीयते चेन्महदर्थो भविष्यत्येव। पाठकानां विनोदावहान्यप्यत्रांगानि भवितव्यानि[१]।

भारतीयानां विविधानां नूतनसाहित्यानां तल्लेखकानाञ्च विषये प्रतिपत्रं यदि लिख्यते तर्हि महांल्लाभो भवेद्विदेशीयानामस्मादृशाम्। चतुर्थे पृष्ठे श्रीशङ्कराचार्याणाम् सन्देशः इत्यत्र मकारप्रयोगः, दशमे सप्तर्षीनप्रैषयत्-इत्यत्र अप्रैषयत्-इति उपसर्गात्पूर्वमडागमप्रयोगः, सप्तविंशे द्वावप्यनुमानौ-इति नपुंसके प्रसिद्धस्यानुमानशब्दस्य पुंसि प्रयोगः इत्येतादृशानि शब्दस्मृतिपथभ्रष्टानि कानिचित् स्थलानि दृश्यन्ते। तदृशामभाव एव श्रेयान्[२]।

आशासे यत् संगमनी भविष्यति अधिकाधिकमुन्नतिं भजेत विभिन्नानां जनानां संगमनी वर्तेत चेति।

---

१. वाक्यमिदं व्याकरणदृष्ट्या चिन्त्यम्।

२. अत्र निवेदयामि—'शङ्कराचार्याणाम् सन्देशः' इत्यत्र मकारप्रयोगः सन्धेर्विवक्षाधीनत्वात् साधुरेव। 'सप्तर्षीनप्रैषयत्' अत्र टङ्कणदोषेण नकारो हलन्तो न जातः, अडागमस्तु प्र-पश्चादेव, अतो हि 'प्रै' इति रूपं वर्तते। 'अनुमानौ' इत्यत्र पुंसि प्रयोगः 'मन्' धातोर्घञ्-प्रत्ययं कृत्वा विहितः। 'मा'धातोः 'ल्युटि' तु अनुमानमिति।—सम्पादकः

SCHOOL OF ORIENTAL AND AFRICAN STUDIES UNIVERSITY OF LONDON W. C. 1.
**E. W. Garland (Mrs).**
SECRETARY TO PROFESSOR BROUGH.

19th July, 1965

Dear Sir(s),

This letter is to acknowledge the safe receipt of your Quarterly Magazine Sangamani.

I regret, hower, that Professor Brough will be unable to pass comment on this publication : he is out of the country at present and will not be returning until October, 1906.

SEMINOR FUR INDOLOGIE
DER UNIVERSITAT ZU KOILN
DIREKTOR : PROF. *Dr. K. L. Janert*

ALBERTUS-MAGNUS-PLATZ
JULY 5, 1965
5 KOELN-LINDENTHAL
GERMANY

Dear Sir,

With many thanks I acknowledge the receipt of your 'First Quarterly Magazine' from which I extracted highly interesting elucidations on various projects.

I should greatly appreciate if you could spare also in the future an extra copy for my Institute.

Once again, my sincere thanks are due to you.

नागपुरस्थसंस्कृतभाषाप्रचारिसभायाः २६-५-'६५

*'संस्कृतभवितव्यम्'*—साप्ताहिकपत्रस्य—

इयं संस्कृतमयी त्रैमासिकी पत्रिका प्रयागतः प्रकाशिता एधते। तस्याः सम्मुद्रितं प्रथमाङ्कं पश्यतां नश्चेतः प्रमुदितं वर्तते। संस्कृतविषये ऽनुसन्दधतां जनानां स्वलेखानां प्रकाशनाय स्थानमेकं पत्रिकया अनया समर्पितं तिष्ठति। संस्कृतेऽनुसन्धानकर्मणि लग्नाः पण्डिताः स्वलेखान् प्रायः आंग्लभाषा-पत्रिकासु प्रकाशयन्ति। संस्कृतमात्रविदः पण्डिताः ततो वञ्चिता भवन्ति। यदि सर्वे संस्कृतपण्डिताः संस्कृतमाश्रित्य स्वलेखान् प्रकाशयेयुः तर्हि संस्कृतज्ञा विदेशस्थिता अपि तेषां चिन्तनं ज्ञातुं समर्था भवेयुः। संस्कृतविश्वे नवविचारसौरभं प्रसार-यितुं गन्धवहकृत्यसम्पादने नातिचिरेण स्वभगिनी इयं समर्था भवतु-इति संस्कृतभवितव्यं तद्धितं मनसा ध्यायति। अस्मिन् प्रथमाङ्के श्रीलक्ष्मणनारायण-शुक्लमहाशयानां 'प्राचीनभारते चौर्यशास्त्रम्' इति लेखः पठनीयलेखेषु अन्यतमः। अप्रकाशितग्रन्थानां प्रकाशनस्यापि कांचित् योजनां संगमनी मनसि करोति। तदनुसारेण विश्वेश्वर-कविचन्द्र-रचितायाः चमत्कारचन्द्रिकायाःप्रथमो विलासः अत्र मुद्रितः तिष्ठति। संगमनीयेन मणिना वियुक्तोर्वशीपुरूरवसोः पुनः सङ्गमः सम्पादितोऽभूत्। श्रीकालिदासजयन्त्युत्सवात् लब्धप्रेरणया अनया संगमन्या देशे विदेशे स्थितानां संस्कृतज्ञानां विचारसङ्गमः प्रवर्तताम्। नवभारते आंग्ल-भाषाया व्यामोहं त्यक्त्वा संस्कृताश्रयेणैव फ्रेंच-जर्मन-रशिया-जापान-प्रभृतिदेशे स्थितैः पण्डितैः सह विचारविनिमयो योग्यः शक्यः च स्यात्। तदर्थं पुरोयाता इयं संगमनी लेखकपाठकैः सह शासन-सहकार्यम् अपि सुचारु लभताम् इति वाञ्छामः।

# अक्षरविज्ञानम्

●

श्री देवदत्त शास्त्री

अस्ति भाषाविज्ञानस्य भाषाशास्त्रस्य वोत्सोऽक्षरविज्ञानम् । किन्त्वक्षरविज्ञानं वर्तते न वा ? यदि वर्तते तर्हि किमाकारकं तत् ? एष एव संप्रश्नः सन्देहो वा वर्तमानभाषाविज्ञानक्षेत्रे प्रश्नचिह्नरूपेण उपतिष्ठते ।

पाश्चात्यभाषाशास्त्रिणामनुवर्तिनः डा० बाबूराम सक्सेना, डा० सुनीति कुमार चाटुर्ज्या, डा० उदयनारायण तिवारी प्रभृति भारतीयभाषाशास्त्रिणः कथयन्ति मन्यन्ते च यत् बहवः शब्दा निरर्थकाः सन्ति यथा—डित्थ, डवित्थ, घोंघा, ठुमरी, दादरा इत्यादयः ।

भाषाविज्ञानस्य व्याख्यावसरे मैक्समूलरेणापि Sectures on tde Science of the Language एतन्नामकस्य ग्रन्थस्य प्रथमखण्डे, ८२तमे पृष्ठे निगदितं यत्—ध्वनयः विचारान् कथं प्रकटयन्ति ? केन प्रकारेण धातवो दर्शयन्ति विचारान् ? कथं माधातोरर्थो मानम्, मन्धातोरर्थः चिन्तनम्, गम्धातोरर्थो गमनं, स्थाधातोरर्थो गतिनिवृत्तिः चर्धातोरर्थः चलनम् तथा कृ धातोरर्थः करणमभूत् ।

स्पष्टं प्रतीयते यत् मैक्समूलरः एतेन विज्ञानेनापरिचितो यद् धातूनामर्थाः केन कारणकार्यभावेन निश्चिताः सन्ति । सुनिश्चितमेतत् यत् भारतीयाया अक्षरविज्ञानानुशीलनपरम्परायाः तिरोधाने सति वर्तमानप्राच्य-पाश्चात्य-भाषा-शास्त्रिणः तमसावृताः सन्ति । अतएव वदन्ति-बहवः शब्दा निरर्थकाः सन्ति इति।

महाभाष्ये भगवता पतञ्जलिनोक्तं यत्—

अर्थवन्तो वर्णाः । धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् । धातव एकवर्णा अर्थवन्तो दृश्यन्ते । प्रातिपादिकान्येकवर्णान्यर्थवन्ति । निपाता एकवर्णा अर्थवन्तः ।

एतत्पूर्वम् ऋग्वेदेऽप्युक्तम्—

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ।।

—ऋ० १।१६४।३९

अयमेवाशयो यत् ऋचः परमाविनाशिनि शब्दमयेऽक्षरे निषीदन्ति । यत्र देवाः (शब्दानां विषया अर्थाश्च) निषीदन्ति । यस्तन्न जानाति अक्षरार्थं सः किं करिष्यति ऋचा ।

एतस्मिन् मन्त्रे लिखितं भगवता पतञ्जलिना यत्—

वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते ।
तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते ।।

—महाभाष्य १। १२

वाण्या विषयो वर्णज्ञानम्, यत्र वेदो वर्तते । अस्यायम् आशयः यद् अक्षरार्थं विहाय वेदज्ञानमसम्भवम् । यास्केनापि अक्षरविज्ञानमवलम्ब्य निरुक्तं लिखितम् । तद्यथा—

कः कमनीयो भवति, सुखो भवति, क्रमणीयो वा ।

अर्थात् कः इत्यक्षरस्य कमनीयः सुखः, क्रमणीयः अर्थो भवति

अथच

तद्यथा कः कमनो वा क्रमणो वा सुखो वा इति

—निरुक्तदैवतकाण्डे ४।२२

अनेनैव प्रकारेण छान्दोग्येऽपि सत्यशब्दस्यार्थः अक्षरविज्ञानेन कृतः—

सत्यशब्दस्य स—त—य अक्षराणाम् पृथक्त्वेन अर्थोऽनेन प्रकारेण कृतः—

तानि ह वा एतानि त्रीण्यक्षराणि 'स—ति—यमिति'।
तद्यत् सत् तदमृतमथ यत् ति तन्मर्त्यमथ यत् यम् तेनोभे यच्छति।

अर्थात् सत्यशब्दस्य त्रिषु अक्षरेषु स अक्षरस्यार्थः अमृतम्। त अक्षरस्यार्थो मर्त्यम्। तथा च य अक्षरस्य अर्थः अमृतं —मर्त्यञ्चोभयोर्नियामक इति।

गोपथब्राह्मणेऽपि भर्गशब्दस्य अक्षरार्थं स एव अनेन प्रकारेणैव कृतवान्—
भ—इति भासयन्तीतीमांल्लोकान्।
र—इति रञ्जयतीतीमांल्लोकान्।
ग—इति गमयतीतीमांल्लोकान्। इति भर्गः।

अनेनैव प्रकारेण समस्तवैदिके लौकिके साहित्ये च प्रत्येकाक्षरस्याथः प्रचलितोऽस्ति। एष मौलिकार्थान्वेषणविधिः, अक्षरार्थज्ञानञ्च भारतीयाचार्याणां विदुषां च परम्परायाम् वर्तते। एकाक्षरी कोशोऽक्षरार्थविधेर्निदर्शनमस्ति।

वैयाकरणा धातूनाम् प्रत्येकवर्णानां संयमं कृत्वा अक्षरार्थं स्थिरीकुर्वन्ति स्म। एषा पद्धतिः शब्दसंयम इति नाम्ना प्रसिद्धा, योगसूत्रे पतञ्जलिमुनिना लिखितम् यत्—

**शब्दार्थप्रत्ययानामितरेतराध्यासात्संस्कारस्तत्प्रविभागसंयमात्सर्व-भूत-रुतज्ञानम्।**

निर्विवादमिदम् यत् शब्दार्थप्रत्ययानाञ्च संयोगविभागयोः संयमे कृते सति मानवो भाषायाः प्रत्येकवर्णस्य अर्थं ज्ञातुमर्हति। अथच पशु-पक्षिणाम् इतर-प्राणिनाम् च भाषायाः शब्दसंयमे कृते सति सर्व-प्राणिनाम् भाषाज्ञानं सम्भवम्।

पुरा पशुपक्षिणाम् भाषां ज्ञातुं शब्दसंयम-विधिरेष प्रचलितो भारतेऽस्मिन्। अक्षरविज्ञानमेव देवनागरलिपेर्मूलाधारः। संस्कृतविदुषामद्य विहितधर्मो यत्ते शब्द-संयमपद्धत्या अक्षरविज्ञानस्याध्ययनमध्यापनं कुर्वन्तोऽस्य विज्ञानस्य प्रचार प्रसारं च कुर्वीरन्।

●

# साहित्यदर्पणकारस्य कालिदाससूक्तिसमीक्षा

●

*पण्डितबटुकनाथ शास्त्री खिस्ते*

विगत एव हायने 'मम्मटकालिदासयोर्विचारवीचयः' इत्यभिधानाङ्कितः कश्चन निबन्धः काव्यप्रकाशस्थसप्तमोल्लासनिर्दिष्टानां कालिदासीयपद्यगतानां दोषाणां समाधानरूपेणाऽऽलिखितः। प्रायस्तत्र क्रमश एव दूषणानां निबर्हणं प्रादर्शि। तदनु प्रसङ्गात्परिशील्यमाने साहित्यदर्पणे तत्र मम्मटेन अपरामृष्टपूर्वाणि कानिचित् दूषणस्थलानि कालिदासकाव्यविषयकाणि सन्तीत्यालोक्य तत्समाधानमपि पूर्वनिबन्धानुषङ्गेण कर्तव्यतामावहतीत्यनुभूतम्।

तामेव धियमनुसृत्य लघुतरेऽस्मिन्निबन्धे तान्येव विशेषतः परामृश्यन्ते, क्वचित्तु प्रमादवशादवधीरितं काव्यप्रकाशस्थलमपि।

तत्र प्रथमं दर्पणकारेण अविमृष्टविधेयांशाभिधस्य दोषस्य उदाहरणतया परिगृहीतं रघुवंशस्थलम् आसमुद्रक्षितीशानाम्—इति।

अत्राऽयमाशयो दर्पणकारस्य—

रघूणामधिकारस्य समुद्रपर्यन्ततायाः प्रत्यायनं कवेरभीष्टं, तच्च विधेयतया प्रतिपाद्यम्। परं समासेन सा विधेयता न सम्यक् प्रतीयते, किन्तु समुद्रपर्यन्तत्वविशिष्टक्षितीशत्वमेव प्रतीयत इति प्रोक्तदोषप्रसक्तिर्दुर्वारा विवक्षितविधेयांशतिरस्कारात् इति।

अत्र प्रतिविधीयते—

न खल्वत्र समुद्रपर्यन्तत्वमात्रं विधेयं, किन्तु समुद्रपर्यन्तक्षितिनायकत्वमेव। किमत्र प्रमाणमिति चेत् कवेर्विरचनैव प्रमाणम्।

कस्याञ्चन किंवदन्त्यां 'रात्रिरेवं व्यरंसीत्' इति भवभूतिपद्ये बिन्दुनिरासमात्रेण 'रात्रिरेव व्यरंसीत्' इत्युक्त्वा चमत्कृतिविशेषमादधौ महाकविः कालिदास इत्यनुश्रूयते, तद्वदेव यदि कवेः समुद्रपर्यन्तत्वमात्रे प्राधान्यविवक्षा अभविष्यर्त्तर्हि सबिन्दुकत्वमेवाऽरचिष्यत्कविवरः तावता वृत्तभङ्गादिदोषाभावात्।

कवेरुक्तिरपि तदनुगुणा—'तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः।'

मल्लिनाथोऽपि विवृणुते—'आजन्मशुद्ध्यादिभिः कर्तृभि' रिति। तस्मात्—तादृशक्षितीशत्वादेरेव विधेयत्वप्रतिपत्तिः सुस्फुटा। श्लोकचतुष्टयेन प्रबन्धप्रवृत्तानां षष्ठ्यन्तविशेषणानां पूर्वं-पूर्वंसाकाङ्क्षाणां विधेयतया प्रतीतिरुपजायते। विशेषण-विशेष्ययोः समानलिङ्गवचनतया स्वारसिक एव अन्वयबोधः प्रवर्तते। अयं विधेयाऽविमर्शदोषः समासे असमासे च परिदृष्टः। विधेयतया विवक्षाया एव प्राधान्यात् क्वचित्तु समासेऽपि न विधेयताबुद्धिः प्रतिबध्यते यथा—लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यादौ। अतो यदि 'आसमुद्रक्षितीशाना' मित्यत्र समुद्रपर्यन्तत्वं विधेयमित्याग्रहः, तदा तदपि प्रतीयतां नाम। इत्थं महाकवेर्वचसि न दूषणावसरः।

इतोऽग्रे वाक्यदोषेषु अधिकपदस्य उदाहरणतया पद्यमिदमुपन्यस्यते दर्पणकारेण—

'अथोष्ट्रवामीशतवाहितार्थं
प्रजेश्वरं प्रीतमना महर्षिः।
स्पृशन् करेणाऽऽनतपूर्वकायं
सम्प्रस्थितो वाचमुवाच कौत्सः॥'

अत्र ईप्सितद्रविणलाभानन्तरं जिगमिषुः कौत्सो 'वाचमुवाच' इत्यत्र 'उवाचे' तिवचधातुनैव निर्व्यूढे कार्ये 'वाचमिति' पदमधिकम्। विवक्षितान्वयाऽनुपयुक्तपदशालित्वमेव अधिकपदत्वमित्युच्यते।

अत्राऽयमाक्षेपोऽपि निरस्यते—तथाहि पूर्वमेतत्पदार्थः परिशीलनीयः, तदनुसारं दूषणगवेषणा करणीयेति प्रशस्तः पन्था :—

तादृशेन लोकोत्तरेण रघोः प्रभावेण पूरिताभिलाषः शतशः क्रमेलकेषु वडवासु च गोणीपूरितं कनकराशिं गुरुदक्षिणार्थमादाय सन्तुष्टचेता जिगमिषुर्महर्षिः कौत्सः कीदृगवस्थ इत्यालोच्यते चेत् स्फुटमिदं प्रतीयेत यत् अत्यन्तं प्रसीदच्चेताः स्वकार्यपूर्त्या तत्प्रतिदानाय पुण्यमपि अंशतो व्ययीकर्तुं तत्परः, किञ्च 'कृते प्रतिकृतं कुर्यादेष धर्मः सनातनः' इत्युक्तदिशा विशिष्टां वाचमुदीरयति स्म नतु साधारणीम् ।

अतएव महाकविना प्रकरणानुकुलानि पदानि प्रयुज्यन्ते । तथाहि—प्रजेश्वरमिति । ईष्टे इति ईश्वरः, प्रजानामुपलक्षणतया ऋष्यादीनामपि कार्येषु सामर्थ्यमावहति, इति तादृशम् । प्रीतमना महर्षिरिति पदयुगली साभिप्रायैव । यतः—अत्यन्तं सन्तुष्टचेताः, स्वतपसा महर्षिदशां निग्रहानुग्रहसामर्थ्यलक्षणामधिष्ठितः कौत्स इत्यर्थः । ननु महर्षित्वात्स्वयं समर्थोऽपि किमर्थं रघुमेवाऽयाचत इत्याशङ्कनीयम् । अर्थप्रदानस्य राजधर्मत्वात्तदनुसरणस्यैव न्याय्यत्वात् । एवं 'वाच' मित्यस्य विशिष्टामाशीर्लक्षणामित्यर्थकरणान्न दोषः, प्रत्युत ध्वनिमहिम्ना चारुत्वापादनं क्रियते कविवरेण ।

'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति' इत्यादि अर्थान्तरसङ्क्रमितध्वन्युदाहरणे या रीतिः सैव अत्राप्यनुसर्तव्या ।

'वाचमुवाच' इत्यत्र 'वाक्' शब्दमुख्यार्थस्य अक्षरोच्चारणलक्षणस्य बाधात् सामान्यविशेषभावसम्बन्धेन विशिष्टां वाचमिति लक्ष्यते, तत्प्रयोजनीभूतं व्यङ्ग्यं तु पुत्रादिकल्याणगुण-गण-फलप्रदानोन्मुखत्वमिति वाचि प्रतीयते, इत्येवं रीत्या ध्वनिभेदमनुप्रविशतो ऽस्य स्थलस्य कुतो दूषणावसरः ।

प्रकारान्तरेणाऽपि समर्थयितुं शक्यमिदं—यथा—

'देवं यजति' 'गन्धं जिघ्रति' इत्यादिप्रयोगेषु 'यज्' प्रभृतीनां धात्वर्थानां देवपूजाद्यर्थत्वेऽपि पूजाग्रहणमात्रार्थत्वं कल्प्यते, तद्वदेव 'वाचमुवाच' इत्यत्राऽपि

'उवाच' इत्यस्योच्चारणमात्रार्थत्वं कल्पनीयम् । एवम् 'अस्थानस्थपदं' नाम दोषमुदाहरन्नाह दर्पणकारः—रघुवंशस्य षोडशसर्गस्थमिदं पद्यम्—

'तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ।'

अत्र कुशो विग्रहवत्या अयोध्यादेवतया प्रार्थितः पुनरपि तां नगरीं स्वीयां राजधानीं निर्मित्सुः कुशावत्याः प्रचलितो मध्येमार्गं गङ्गामुत्ततार इति प्रकरणम् । अत्र 'तदीये' इति पदं गङ्गासम्बन्धितया योजयतो दर्पणकारस्य महान् प्रमादः । तदनुसारमुच्यते तेन—'अत्र तदीयपदात्पूर्वं गङ्गामित्यस्य पाठो युक्तः' इति । पूर्वमभिहितस्यैव पश्चात्सर्वनाम्ना निर्देशो युज्यते, अत्र तु पूर्वमेव 'तदीये' इति सर्वनाम, पश्चाद् 'गङ्गा' मिति प्रयुक्तमित्यन्वयानुसन्धानवेलायां विसंष्ठुलत्वं पदानामस्थाने विन्यासात् इति तस्याऽऽशयः । परमिदं सर्वम् अस्थानविजृम्भितम् । यतः—एतत्पद्यात्पूर्ववर्ति पद्यमिदं द्रष्टव्यम्—

'स धातुभेदारुणयाननेमिः प्रभुः प्रयाणध्वनिमिश्रतूर्यः ।
व्यलङ्घयद् विन्ध्यमुपायनानि पश्यन्पुलिन्दैरुपपादितानि ॥'

अत्र तु स्पष्टमेव 'विन्ध्यस्य' सम्बन्धः प्रतीयते, अग्रिमे पद्ये, विन्ध्यस्यैव तदीये इति सर्वनाम्ना निर्देशः । तस्मात् 'तदीये वैन्ध्ये' इति व्याचक्षाणो मल्लिनाथः साधुरेव । अनया पद्धत्या नात्र दोषलेशावकाशोऽप्यवशिष्यते । एतदनन्तरं 'एभ्य.पृथगलङ्कारदोषाणां नैव सम्भवः' इत्युक्तदिशा अलङ्कारनिबन्धने यत्किञ्चिदनौचित्यं प्रतिभाति तत्सर्वं पूर्वोक्तदोषस्पर्शमूलकमिति विचारयतो दर्पणकारप्रकाशकारयोर्विवेच्यतामुपगतं कुमारसम्भवनिर्दिष्टं पद्यमुद्वीक्ष्यतां सहृदयैः—

'दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव ॥'

अत्र दिवाकरभयात्पलायमानं शरणागतमन्धकारं गुहासु हिमालयो रक्षतीति कविनोत्प्रेक्षितः कश्चिदर्थः, स तावन्मात्रया भणित्यैव परिसमापनीयः, न तु 'क्षुद्रेऽपि नूनं' इत्याद्युक्त्या समर्थयितुं योग्यः, सर्वथा गगनकुसुमायमानस्य

तादृशार्थस्य समर्थनमनुचितार्थतां प्रकाशयतीति। अत्रेदं विचार्यताम्—न केवलमचेतनवृत्तान्तापनिबन्धनं दोपाय, महाकाव्येषु कविभिः शतशस्तथाविधाः कल्पना उपनिबद्ध्यमानाः सहृदयहृदयानन्दावहाः प्रतीयन्ते। अत्राऽऽलोचकानां टीकाकाराणां निष्कर्षः एतावानेव यत् उत्प्रेक्षा तु न दोषाय। तादृशोत्प्रेक्षितार्थसमर्थनमेव दोषं जनयतीति। तत्रेदमुच्यते—अचेतनवस्तुवृत्तान्तः प्रायः केनाऽपि चेतनवस्तुवृत्तान्तेनाऽनुप्राणित एव कवीनां रचनासु पदमाधत्ते। ध्वनिकारेण द्वितीयोद्योते ध्वन्यालोके विशदमभ्यधायि—'यदि तु चेतनानां वाक्यार्थीभावो रसाद्यलङ्कारस्य विषयः इत्युच्यते तर्हि—उपमादीनां प्रविरलविषयता, निर्विषयता वा अभिहिता स्यात्' इति। 'तन्महतः काव्यप्रबन्धस्य रसनिधानभूतस्य नीरसत्वमभिहितं स्यात्' इति च।

उदाहृतानि चाऽग्रे भूयांसि पद्यानि—

एवमत्र 'दिवाकराद्रक्षती' त्युदाहरणे उत्प्रेक्षितोऽर्थो न निरूपाख्यप्रख्यः, किन्तु चेतनवृत्तगर्भतया साभिप्राय एव हिमालयोत्कर्षवर्णनस्य प्रस्तुतत्वात्। द्विविधमपि हिमवतो रूपं वर्णितं महाकविना चेतनमचेतनञ्च।

हिमालयस्योत्कर्षे साधिते ततः पार्वत्या रूपगुणादिवर्णनं प्रकर्षमाधास्यतीति कवेरभिप्रायः। किञ्च—'ममत्वमुच्चैः शिरसामतीव' इत्यादिना समर्थितः शरणागतान्धकाररक्षणव्यवसायः सौन्दर्यमनुबध्नाति। 'उच्चैः शिरसा' मिति पदं नितान्तं चमत्कारि, उच्चैःशिखरशालित्वं, गौरवेणोन्नतशिरस्कत्वञ्चेति तदभिप्रायव्यञ्जनात्। एतेन—'प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत्।' इत्युक्तदिशा प्राकरणिको हिमालयोत्कर्षः साधु सिद्ध्यति, प्रकृष्यते च पार्वत्या वक्ष्यमाणं चरितमिति कथमेतस्य दोषावहत्वमिति न जानीमः।

इतः परम्—उपमादोषविचारप्रसङ्गे काल-पुरुष-विध्यादिभेदस्य भग्नप्रक्रमदोषाक्रान्तत्वमुक्तं दर्पणकृता। प्रसङ्गादुद्धृतं कालिदासीयं पद्यमिदम्—

काऽप्यभिख्या तयो रासीद् व्रजतोः शुद्धवेषयोः
हिमनिर्मुक्तयोर्योगे चित्रा-चन्द्रमसोरिव ॥'

अत्रेयं तदीया विचारदृक् —

तथाभूतयोश्चित्राचन्द्रमसोः शोभा न खल्वासीत् इति भूतकालिकक्रियासम्बन्धेन निर्देष्टुमुचिता, नक्षत्रचन्द्रसंयोगस्य सर्वदैव प्रवर्तमानात् । सुदक्षिणादिलीपयोस्तु सकृदेव सा शोभा तदाऽजायतेति समुचितं तत्रैव क्रियायोजनम् । तस्मादत्रोपमानेऽतीतकालस्य बाधात् वर्तमानोहेनाऽन्वयप्रतिसन्धानात् प्रक्रमभङ्गः इति ।

अत्राऽपि विदाङ्कुर्वन्तु सहृदयास्तथ्यमेतत्—

न खल्वत्र 'क्रिया' साधारणो धर्मः, येन—उपमानोपमेयभावनिर्वाहस्तया विना न चरितार्थो भवेत्, किन्तु काऽपि लोकमनोहारिणी अभिख्यासाधारणो धर्मस्तदन्वये तु न काऽप्यनुपपत्तिः ।

न च क्रिया किञ्चिद्धर्मरूपा केवलं सत्तामात्रप्रत्यायिकेति तस्या औपम्यनिर्वाहे न भूयानुपयोगः ।

इयमेव रीतिः—

'अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमात् यामिनीयामान् प्रसादमिव चेतना ॥

इति प्रकाशोदाहृते पद्येऽप्यनुसर्तव्या । तत्र 'प्रसादस्य' साधारणधर्मत्वात् । अन्यदपि विचार्यताम्—उपमानभूतचन्द्रकमलादिगतानां गुणानां क्रियाणां वा सर्वदा वर्तमानप्रत्ययगोचरत्वं सुवचम् ।

उपमेयभूतस्त्रीपुरुषादिपात्राणां तत्तत्कथानुरूपभूतभविष्यत्कालगोचरत्वं कविकल्पनायत्तमिति स्थितौ क्रियापदानां कालभेदो न दोषावहः, औपम्यनिर्वाहकस्य साधारणधर्मकृतचमत्कारस्य केनाऽपि हेतुना सम्यगनभिव्यक्तौ दोषः

समुद्भावनीयः । तस्मात्पूर्वोक्तानि कालिदासरचनास्थलानि न लेशतोऽपि दूषणीयतामर्हन्ति प्रत्युत मार्मिक-सहृदय-साधुवादकुसुमोत्करैर्भूषणीयतामेव प्रतिपद्यन्त इति निवदेयामः । अन्ते च

अमन्दानन्दसन्दोहमकरन्दकरम्बिता ।
कालिदासकवीन्द्रस्य जीयाद्वचनमञ्जरी ॥

कालिदासशिवशैलशेखरात्
स्वैरमुन्मिषति काव्यनिर्झरे ।
नैव शैवललवोपमा क्वचिद्
दूषणस्थितिरुदेतुमर्हति ॥

## चेतांसि हर्तुं क्षमा

सत्यं सन्ति गृहे गृहे सुकवयो येषां वचश्चातुरी,
स्वे हर्म्ये कुलकन्यकेव लभते जातैर्गुणैर्गौरवम् ।
दुष्प्रापः स तु कोऽपि कोविदपतिर्यद्वाग्रसग्राहिणाम्,
पण्यस्त्रीव कलाकलापकुशला चेतांसि हर्तुं क्षमा ॥

—रुद्रभट्टस्य

# वर्षामङ्गलम्

●

*सूक्तिसिद्धानाम् प्राक्तनकवीनाम्*

एकस्य तस्य मन्ये धन्यामभ्युन्नतिं जलधरस्य ।
विश्वं सशैलकाननमाननमवलोकते यस्य ॥

—प्रह्लादनस्य

मेघाटोपैः स्तनितसुभगं वीक्ष्य खं हस्तिदन्तैः
कृत्वा भित्तीरुपरि सदनं चामरैश्छादयित्वा ।
कर्पूरैस्तां मृगमदरसैर्भूमिमालिप्य शेते
सैंहे चर्मण्युरसि दयिताबाहुरूढः पुलिन्दः ॥

—कस्यापि

क्षपाः क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क्व साम्प्रत्युष्णांशुर्गत इति तदन्वेषणपरा—
स्तडिद्दीपालोका दिशि-दिशि चरन्तीह जलदाः ॥

—पाणिनेः

शीतलादिव सन्त्रस्तं प्रावृषेण्यान्नभस्वतः ।
नभो बभार नीरन्ध्रं जीमूतकुलकम्बलम् ॥

—सर्वदासस्य

मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥

—वाल्मीकेः

एणी याति विलोक्य बालशलभान् शष्पाङ्कुरादित्सया
छत्रीकुण्डलकानि रक्षति चिरादण्डभ्रमात्कुक्कुटी ।
धूत्वा धावति कृष्टकीटपटलश्रेणीं शिखण्डी शिरो
दूरादेव वनान्तरे विषधरग्रासाभिलाषातुरः ॥

—योगेश्वरस्य

एतस्मिन्मदजर्जरैरुपचिते कम्बूरवाडम्बरैः
स्तैमित्यं मनसो दिशत्यनिभृतं धारारवे मूर्च्छति ।
उत्सङ्गे ककुभो निधाय रसितैरम्भोमुचां घोरयन्
मन्ये मुद्रितचन्द्रसूर्यनयनं व्योमापि निद्रायते ॥

—वातोकस्य

हस्तप्राप्यमिवाम्बरं विदधतः खर्वा इवाशातती—
र्गर्जाभिः क्षणजर्जरीकृतघनानुत्तालधारारवाः ।
क्वामग्नं स्थलमस्ति नाम तदिभीवोद्दामसौदामिनी—
नेत्रोन्मेषविलोकिताखिलभुवो वर्षन्ति नक्तं घनाः ॥

—अभिनन्दस्य

छिद्यन्तां वनराजयः कुसुमिता निर्वास्यतां सर्पभु—
ङ्नीपोद्दामकदम्बरेण सुरभिः संग्रथ्यतां मारुतः ।
हा कष्टं धिगहो न कश्चिदपि मे मूकीकरोत्यम्बुदा—
नित्येवं पथिकाङ्गनाप्रलपितं श्रुत्वेव खं रोदिति ॥

— नड्भुवकस्य

नवे धारासारे प्रमदचटुलायाः स्थलजुषो
वराटीशुभ्रायाः शफरसरणेरेभिरुपरि ।
कुलीरैर्भ्राम्यद्भिर्गणयितुमिव व्यापृतकरा
मनः क्रीणन्तीव प्रकटविभवा पल्वलभुवः ॥

—अभिषेकस्य

आरोहवल्लीभिरिवाम्बुधाराराजीभिराभूमिविलम्बिनीभिः ।
संलक्ष्यते व्योम वटद्रुमाभमम्भोधरश्यामदलप्रकाशम् ॥

—दक्षस्य

तडिदुल्कामुखा मेघाश्चर्वितानां वियोगिनाम् ।
उद्वमन्त्यस्थिखण्डानि करकाश्मच्छलादमी ॥

—मदनस्य

वाता वान्तु जलस्पृशो नवघनो विद्युद्भिरुद्योततां
वाष्पं मार्जय पान्थ हे त्वरयतां द्रष्टाऽसि लम्बालकाम् ।
बालां गर्भगृहोषितां परिजनप्रारब्धकर्णद्वय—
च्छिद्रामुद्रणकर्मणः श्लथतया गर्जा न चेच्छ्रोष्यति ॥

—श्रीरुद्रस्य

सोत्साहा नववारिभारगुरवो मुञ्चन्तु नादं घना
वाता वान्तु कदम्बरेणुशबला नृत्यन्त्वमी बर्हिणः ।
मग्नां कान्तवियोगदुःखजलधौ दीनां विलोक्याङ्गनां
विद्युत्प्रस्फुरसि त्वमप्यकरुणा स्त्रीत्वेऽपि तुल्ये सति ॥

—विज्जकायाः

# संस्कृतिर्धर्मश्च

●

*श्री यागेश्वर झाः*

भारतीयसंस्कृतिरेकान्ततो भारतीयानामार्याणामनार्याणां द्राविडानां वेति निश्चेतुं न कोऽप्यर्हति । यतोऽस्या निर्माणे काचन रासायनिकी प्रक्रियाऽङ्गीकृता भाति, येनेदं न कथञ्चित् परीक्षितुं शक्यते यदस्यां महौषधौ कियत्यो वीरुधः, कीदृश्यः, किमाख्यानाश्च ताः । अथवा मधुमक्षिकाणां दृष्टान्तोऽत्र साधूपयुज्यते । यथा मधुमक्षिका विभिन्नसुमनोभ्यो रसान् समाहृत्य मधूनि विवर्तयन्ति तथा भारतीयसंस्कृतेर्निर्माणे भारतीयानां व्यापारः ।

भारतभूमिरियं विविधानां जातीनां वंश्यानां च संगमभूमिरासीदत्र न कोऽपि विसंवादः । अत्र समये-समये मंगोलाः, किराताः, हूणाः, खशाः, बाह्लीकाः, यवनाः, तुरुष्काश्च महोर्मिमालेवाकुला वायव्यकोणादीशानकोणादापतिता मानव-महासमुद्रेऽस्मिन् व्यलीयन्त । तेषामवश्यं भावाभिव्यक्तये काचिद् भाषा, धर्मः, आचारः, व्यवहारः, विश्वासः, मान्यता, इतिहासः, साहित्यं, मनोरञ्जनाय लास्यं, नृत्यं, विलसितञ्चासीत् । परन्तु यवनान् विहाय न केषाञ्चित् कुत्रचित् किञ्चिदप्य-स्तित्वं स्मृतिशेषो वाऽत्र वर्तते । स्वेच्छयाऽनिच्छया वा दुग्धे सितेव तादात्म्यं गताः । कारणञ्चात्रत्यानां जनानां धर्मे, विचारे, व्यवहारे च नितरामौदार्यं, व्यापकत्वं, सहिष्णुता चासीत् । धर्मेऽत्र न कश्चिद् दुराग्रहः । साकारं निराकारं वा ब्रह्मोपासताम्, सेश्वरो निरीश्वरो वाऽऽस्ताम्, हिंसका अहिंसकाः क्रव्यादा असुरा वा सन्तु, किन्तु न कश्चित् प्रतिरोधः प्रतिबन्धो वा भारतीये सनातने धर्मे

स्थातुं केषाञ्चित् कुत्रचित् । संसारे कस्मिन्नपि धर्मे सम्प्रदाये च विचारस्वातन्त्र्येण स्वाधीनचिन्तनस्य स्वस्वभावाभिव्यक्तेरियती स्वतन्त्रता, इयानवकाशो नासीत्, येनात्रागन्तुकैर्भारतीयसंस्कृतेर्ग्रहणे तत्र सम्मिश्रणे च नितरां सौकर्यमनुभूतम् । न तैः कदाचिदेवमनुभूतं यदहं स्वधर्मं विहाय धर्मान्तरं स्वीकरोमि, स्वसंस्कृतिं विश्वासं रीतीः पद्धतीर्वा विजहामीति भारतीयसंस्कृतेर्विशालतायाः परिणामः । येन संस्कृतिरियं दिने-दिने समृद्धा परिपुष्टा जनप्रिया चाभवत् । अतएव यथा विजेतार आक्रामकाश्च विजयगीतं गायन्तः साट्टाट्टहासं स्वजातीयमहिमानमुद्घोषयन्तो भारतस्य भूभागमधिकृत्य स्वेच्छया भारतीया अभवन्, तथा स्वदेशे उपेक्षिता दलिता उत्पीडिता दासीकृताः कतिचनासंख्याता विदेशीया अत्रागत्याभयमलभन्त कालक्रमेण व्यलीयन्त चात्र परमोल्लासैः ।

अन्यतः कतिचन समुद्रपारीणाः श्वेता अश्वेताः पिङ्गाश्च स्वधर्मान् विचारान् विश्वासांश्च ग्राहयितुं परान् बाधमाना इतिहासे कुश्रुताः सन्ति । कटुसत्यन्त्विदमस्ति यदद्यावधि यावान् रक्तपातो जनसंहारो वा साम्राज्यविजिगीषया जायतेस्म ततः शतकृत्वः सहस्रकृत्वो वा जनसंहारः स्वधर्माणां सम्प्रदायानां दुराग्रहार्थमभूत् । यदर्थं कियन्तस्तत्त्वदर्शिनो महर्षयो वीतरागास्तपोधना ज्ञानिनो मानिनो बहुश्रुतास्तपस्विन ईशा, मूसा, मंसूरादयः समिद्धतमे वह्नौ प्रक्षिप्ता, गरलं पायिताः, शूलानि कीलानि सन्धाय घातिताः, खड्गैर्भल्लैः परश्वधैर्भिन्नाश्छिन्नाश्चेति केषां कृते न लज्जावहम् ?

अतोऽत्र सर्वेषामैकमत्यं यदद्यापि संसारे नेदृशी काचन संस्कृतिर्यत्राधिकाधिकानां विश्वस्य मानवानामान्तरं बाह्यं च सामञ्जस्यं भवितुमर्हतीति विवेकानन्दः स्वामिरामतीर्थादयश्चाकुतोभयं भ्रमन्तो जनान् डिण्डिमघोषैः समुदबोधयन्नचेतयंश्चाद्यतनान् भौतिकेन चाकचिक्येन चंक्रममाणान् हृतचेतसः क्वचन काश्चनानुधावमानान् दिग्भ्रान्तान् यूनः, यद् भारतीयतामवमत्य न केषाञ्चित् कथञ्चिच्छ्रेयो भवितुमर्हति । यदाह मनुः—'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः । स्वं-स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥' इति । इदमेव तत्त्वं प्रायशः परेषामाकर्षणकेन्द्रं जिज्ञासितव्यं च प्रतिभाति भारते ।

किन्तु कुर्वंस्त्वात्मपरीक्षणं क्षणमपि भारतीया यदवशिष्यते किमपि देयं परेभ्यो भवत्सविधे ऋते घृणामोहासूयादम्भपैशुन्यविश्वासघातप्रवञ्चनप्रतारणादिभ्यः। येन राजनीतिर्लोकनीतिः संस्कृतिः सभ्यता चाशेषतो दूषिता कलुषिता दिने-दिने रुग्णा क्षीणा चालक्ष्यते। यदासीदप्युपनिषदि महाभारते रामायणे च किमपि शाश्वतं सत्यं तदस्माभिः क्वचन भ्रष्टं नष्टं साधयितुं प्रभवति, प्रत्युत श्रुतिस्मृतिपुराणेतिहासादयः संज्ञाहीनाः संवृत्ताः शुष्काश्चाशेषा उत्सा भारतीय-संस्कृतेः। अथाप्याश्वासयितुं परान् यत्सत्यं प्रत्यक्षीकृतं बुद्धेन न्यग्रोधपादपस्याधः, यच्च प्रयोगेण गान्धिनाऽधिगतं समाधानं चाहिंसया यदखिलानां प्रश्नानां कृतं तेन तदिदानी सद्योजातमविकृतमनलसं च सर्वथा। नान्यथा मानवाः सम्भावितात्खण्ड-प्रलयादात्मानं रक्षितुं क्षमा इति तस्य नृहरेर्नेहरूमहोदयस्य स्वरेणोच्चैर्व्याहरत व्याहरतेति शम्।

●

## वाराणसीं वाञ्छति

कर्णाटीदशनाङ्कितः शितमहाराष्ट्रीकटाक्षाहतः,<br>
प्रौढान्ध्रीस्तनपीडितः प्रणयिनीभ्रूभङ्गवित्रासितः।<br>
लाटीबाहुविवेष्टितश्च मलयस्त्रीतर्जनीतर्जितः,<br>
सोऽयं सम्प्रति राजशेखरकविर्वाराणसीं वाञ्छति॥

—राजशेखरस्य

# वर्षागीतम्

●

*श्री प्रभातमिश्रः*

रिमझिमवन्तो वारिधरा रे ! खे नवसुषमां प्रदर्शयन्ति ।

गर्जति वर्षति वारिदमाला,
हर्षति सरसा रसा विशाला,
नृत्यति सरला सुरपतिबाला,
तरलाः ताराः नाद्य लसन्ति ।

रिमझिमवन्तो वारिधरा रे ! खे नवसुषमां प्रदर्शयन्ति ।

रमणीया रमणीव हसन्ती,
दमयन्तीव मनो मदयन्ती,
किमपि नदन्ती घने वसन्ती,
चञ्चति चपला लताः नमन्ति ।

रिमझिमवन्तो वारिधरा रे ! खे नवसुषमां प्रदर्शयन्ति ।

मन्दं मन्दं वहति समीरे,
रिङ्गति 'झर् झर्' निर्मलनीरे,
चातकशिशवः तटिनीतीरे,
'स्वाती स्वाती' सदा रटन्ति ।

रिमझिमवन्तो वारिधरा रे ! खे नवसुषमां प्रदर्शयन्ति ।

●

# प्रयाग विश्वविद्यालयस्य

## 'डि० फिल्०' संस्कृतस्नातकानां शोधप्रबन्धस्य विषयाः

●

| अनुसन्धित्सु-नामानि | शोध-विषयाः |
|---|---|
| १. कुमारी दीपशिखा अग्रवालः | कालिदासकृतिषु प्रकृतिवर्णनस्यालोचनात्मकं तुलनात्मकं चाध्ययनम् । |
| २. श्री काशीनाथ तिवारी | दशकुमारचरितस्य साहित्यिकम् अध्ययनम् । |
| ३. कुँवर नरेन्द्र प्रतापसिंहः | सुबन्धुकृत-वासवदत्तायाः साहित्यिकम् अध्ययनम् । |
| ४. श्री राजेन्द्र प्रसाद मिश्रः | संस्कृतसाहित्ये अन्योक्ति-अलङ्कारस्योद्गम-विकासयोः आलोचनात्मकम् अध्ययनम् । |
| ५. श्री रामावतार त्रिपाठी | पाणिनिसूत्राणाम् सन्दर्भे प्रातिशाख्यानाम् तुलनात्मकाध्ययनम् । |
| ६. कुमारी स्वप्ना बनर्जी | हरिचन्द्रकृत-धर्मशर्माभ्युदयस्यालोचनात्मकं तुलनात्मकञ्चाध्ययनम् । |
| ७. श्री योगेशचन्द्र पाण्डेयः | गोवर्धनाचार्यकृत-आर्यासप्तशत्या आलोचनात्मकम् तुलनात्मकञ्चाध्ययनम् । |

| | |
|---|---|
| ८. कुमारी अलका गुप्ता | विक्रमस्य प्रथमसहस्राब्दकालीनसंस्कृत-नाटकेषु गृहीतमहाभारतस्योपकथानामालोचनात्मकाध्ययनम् । |
| ९. सरस्वती प्रसाद धिमरो | पाणिनेः वैदिकप्रक्रियासूत्राणाम् आलोचनात्मकाध्ययनम् । |
| १०. श्री प्रभुनाथ शुक्लः | संस्कृतमहाकाव्येषु नायकस्य प्रयोगसिद्धान्तयोःसमालोचनात्मकाध्ययनम् । |
| ११. श्री भास्कराचार्य त्रिपाठी | बालरामायणस्यालोचनात्मकं तुलनात्मकञ्चाध्ययनम् । |
| १२. श्री गोविन्दनारायण मालवीयः | बिल्हणस्य विक्रमाङ्कदेवचरिते ऐतिहासिक-सांस्कृतिकतथ्यानामालोचनात्मकाध्ययनम् । |
| १३. श्री लक्ष्मीबिलास उबरालः | षष्ठशतीपर्यन्तसंस्कृतशिलालेखानां साहित्यिकं मूल्याङ्कनम् । |
| १४. श्री रामदेव शुक्लः | संस्कृतकाव्यशास्त्रे रुद्रटस्य-योगदानम् । |
| १५. मनराज यादवः | कन्दलीकारश्रीधरस्य वैशेषिके योगदानम् । |
| १६. श्री बाबूराम पाण्डेयः | अथर्ववेदसंहितायां दार्शनिकतत्त्वानामालोचनात्मकाध्ययनम् । |
| १७. कुमारी शारदा सेठः | भरतात् भोजं यावत् अलङ्काराणाम् सैद्धान्तिक-क्रमिक-विकासस्याध्ययनम् । |
| १८. कुमारी लक्ष्मीदेवी | संस्कृतसाहित्ये नलदमयन्ती-कथाः । |
| १९. विजयकुमार श्रीवास्तव्यः | सप्तपदार्थानां सन्दर्भे वैशेषिकसूत्राणामध्ययनम् । |
| २०. ओङ्कारनाथ वर्मा | संस्कृत-काव्यशास्त्रे अप्पयदीक्षितस्य योगदानम् । |
| २१. रामकैलाश पाण्डेयः | संस्कृतकाव्येषु ऋतुवर्णनस्यालोचनात्मकाध्ययनम् । |

●

# शिवपुराणे जैनधर्मस्योल्लेखः

●

*श्री जयशङ्कर त्रिपाठी*

दक्षिणभारताद् वैष्णवभक्तेश्चलितः प्रवाह् उत्तरभारतम् आक्रान्तवान्। इतिहासस्यायं मध्यकालोऽवर्तत यदा रामानुजो ब्रह्मसूत्रस्य विशिष्टाद्वैतव्याख्यां कृत्वा शङ्करस्याद्वैतं प्रति स्वविरोधं प्रादर्शयत्। अस्मिन्नव मध्यकाले जैनकवयो विष्णोरवतारान् तीर्थङ्करान् मत्वाऽपभ्रंशकाव्येषु अवर्णयन्। जैनमहाकवेः स्वयम्भोः द्वौ प्रबन्धौ स्तः—पउमचरिउ, हरिवंशपुराण इति। अनयो रामो विष्णुश्च जैनधर्मस्यैव प्रेरकौ वर्तेते। कविरिमौ प्रबन्धौ विक्रमस्य नवमशताब्द्यामरचयत्। जैनानां वैष्णवानामेतद् सम्मेलनं जैनधर्मस्य वैष्णवधर्मेऽन्तर्भावं सूचयति। १०८० तमे वैक्रमे गजनी-महमूदः सोमनाथं विजितवान् मन्दिरं प्रतिमां च भङ्क्त्वा सुवर्णरत्नानाम् अपरिमेयराशीनहरत्। अनन्तरं सिद्धराजजयसिंहः (११५०-११९९ वि०) कुमारपालश्च (११९९-१२३० वि०) द्वौ चालुक्यसम्राजौ मध्यभारते अणहिलवाड़ायां सत्तां स्थापितवन्तौ, आभ्याम् सोमनाथमन्दिरस्य पुनरुद्धारोऽक्रियत इतीतिहासाद् अवगम्यते। जैनाचार्यैः शास्त्रपारङ्गतो हेमचन्द्रः सिद्धराजजयसिंहस्य गुरुरासीत्। अयमेव जयसिंहो द्वादशवर्षीये युद्धे मालवानजयत्। अस्य मन्त्रतन्त्राणां सिद्धिरपि अवर्तत, अतोऽयं सिद्धराज इति प्रथितः। इत्थं जयसिंहोऽयं जैनगुरुणा दीक्षितो जैनः, जैनवैष्णवयोः साम्याद् वैष्णवश्च, सोमनाथमन्दिरस्य पुनःप्रतिष्ठापकत्वात् शैवधर्माभिनिवेशी अप्यभवत्। शिवपुराणस्य रुद्रसंहितायां त्रिपुरविजयप्रसङ्गेऽसुरान् विजेतुम् इत्थमेव शैववैष्णवजैनानां परस्परं विचित्रं सहयोगं पुराणकारा

गुम्फितवन्तः । अनेन गुम्फनेन तस्मिन्निहितेतिहासान्वेषणेन शिवपुराणस्य रचना-कालः स्वयमेव प्रस्फुटो भवति, तथा चानुमीयते यदयं पुराणो नितरामर्वाचीनः ।

अस्ति सोऽयं प्रसङ्गो युद्धखण्डे प्रथमाध्यायादारभ्य दशमाध्यायपर्यन्तम् । त्रिपुरैः पराजिता देवा विष्णोः शरणं गतवन्तः । किन्तु त्रिपुराणां शैवधर्मे परिनिष्ठत्वात् तेषां विनाशे भगवतः शिवस्याऽसहमतिः देवानां कृते महान् चिन्ताविषयः, येन प्रकारेण त्रिपुराः शैवधर्मात् भ्रष्टा भवेयुः, स्वधर्मात् स्खलितान् त्रिपुरान् दृष्ट्वा शिवः स्वयं तान् भस्मीकरोतु, इत्थं कश्चिदुपायः चिन्तनीय इति विष्णुमनसि कूटनीतिरुदभवत् । स विष्णुः युक्तिपूर्वकम् एकस्मिन् चरित्रभ्रंशके धर्मे तान् त्रिपुरान् दीक्षितान् अकारयत् । ते तस्मिन् धर्मे दीक्षिताः सन्तः शैवधर्मात् च्युता जाताः । तदा शिवभक्तिरहितास्ते स्वयमेव शिवेन बाणाग्निना अग्नि-सात्कृताः । तस्य चरित्रभ्रंशकधर्मस्य स्वरूपं जैनधर्मस्यैव व्याख्यां प्रस्तौति ।

यदा त्रिपुरविनाशाय देवाः शिवं प्रार्थितवन्तः तदा शिवेनेत्थमुत्तरं तेभ्यो दत्तम् यद् यावत्कालपर्यन्तमास्तिकसत्ताधारिणि त्रिपुरराष्ट्रे वैदिकानां स्मार्तानां च धर्माणां पालनं भवति, शिवलिङ्गस्याहरहोऽर्चनां ते कुर्वन्ति तथा स्वतपोबलचरित्रबलाभ्यां ते बलिनस्तिष्ठन्ति तावदहं कदापि तेषामनिष्टसम्पादनाय क्षमो नास्मि ।

अतो विष्णुस्त्रिपुरवासिनो विपरीतधर्मे दीक्षयितुं नवीनमेकं पुरुषायतिं निर्मितवान्, तं च स्वस्य नवीनधर्मस्य दीक्षादानाय त्रिपुरराष्ट्रे प्रेषितवान् । तस्य यतेरीदृशं कुटिलस्वरूपमस्ति —

> मुण्डिनं म्लानवस्त्रं च गुम्फिपात्रसमन्वितम् ।
> दधानं पुञ्जिकां हस्ते चालयन्तं पदे-पदे ॥
> वस्त्रयुक्तं तथा हस्तं क्षीयमाणं मुखे सदा ।
> धर्मेति व्याहरन्तं च वाचा विक्लवया मुनिम् ॥
>
> [ अध्याय ४।२-३ ]

अयं च मलिनवस्त्रं परिदधत्, हस्ते काष्ठपात्रं पुञ्जिकां च धारयन्, तां प्रतिपदं चालयन्, हस्ते वस्त्रमादाय तेन मुखमावृण्वन्, विकलया वाण्या धर्मधर्मेति प्रलपन् स मुनिः जैनाचार्यमेव स्मृतिपथं करोति ।

स अरिहन्नामा, अपभ्रंशभाषायां तस्य शास्त्र-रचना चासीत्। अरिहन्—शब्दोऽयं जैनानां 'अर्हन्' शब्द एव नान्यः। अपभ्रंशे हि तेषां प्रबन्धाः सन्ति। विष्णुः स्वनिर्मितं मुनिं प्रति तस्य सर्वाभिज्ञानं कारयति—

अरिहन्नाम ते स्यात्तु ह्यन्यानि च शुभानि च।
स्थानं वक्ष्यामि ते पश्चाच्छृणु प्रस्तुतमादरात्॥
मायिन्! मायामयं शास्त्रं तत्षोडशसहस्रकम्।
श्रौतस्मार्तविरुद्धं च वर्णाश्रमविवर्जितम्॥
अपभ्रंशमयं शास्त्रं कर्मवादमयं तथा।
रचयेति प्रयत्नेन तद्विस्तारो भविष्यति॥
ददामि तव निर्माणे सामर्थ्यं तद्भविष्यति।
माया च विविधा शीघ्रं त्वदधीना भविष्यति॥
[अध्याय ४।६-१२]

अभिज्ञापनानन्तरं विष्णुः भगवतः शङ्करस्य चरणकमलं स्मृत्वा तं देवानां प्रस्तुतकार्यपूर्तये आदिदेश—

तमुवाच पुनर्विष्णुः स्मृत्वा शिवपदाम्बुजम्।
मोहनीया इमे दैत्याः सर्वे त्रिपुरवासिनः॥
कार्यास्ते दीक्षिता नूनं पाठनीया प्रयत्नतः।
मदाज्ञया न दोषस्ते भविष्यति महामते!
धर्मास्तत्र प्रकाशन्ते श्रौतस्मार्ता न संशयः।
अनया विद्यया सर्वे स्फोटनीया ध्रुवं यते!
गन्तुमर्हसि नाशार्थं मुण्डिन्! त्रिपुरवासिनाम्।
तमोधर्मं सम्प्रकाश्य नाशयस्व पुरत्रयम्॥
ततश्चैव पुनर्गत्वा मरुस्थल्या त्वया विभो!
स्थातव्यं स्वधर्मेण कलिर्यावत् समाव्रजेत्॥
प्रवृत्ते तु युगे तस्मिन् स्वीयो धर्मः प्रकाश्यताम्।
शिष्यैश्च प्रतिशिष्यैश्च वर्तनीयस्त्वया पुनः॥
[अध्या० ४।१६—२१].

मुण्डिनं प्रति विष्णोरस्मिन् आदेशे किञ्चन ऐतिह्यं तथ्यं स्फुटीभवति—एतत्कार्यसम्पादनानन्तरं त्वया तावद् मरुस्थलीमागत्य वासः कर्त्तव्यः, यावत्कलियुगं न समागच्छेत् । कलियुगाऽऽगमने जाते सति आत्मनोऽयं धर्मस्त्वया प्रकाशनीयः, स्वशिष्यैः प्रतिशिष्यैश्च साकमस्य प्रचारः कर्तव्यः । अनेन ज्ञायते यद् मालवराजस्थानयोर्भूमिः जैनानामुत्कर्षस्थानम्, अपि च मालवैः सह द्वादशवर्षात्मके सङ्गरे जैनमतावलम्बिनस्ते सिद्धराजजयसिंहस्य साहाय्यमकुर्वन् । अत एव वैष्णवशैववर्णाश्रमधर्माणां प्रतिकूलाचरणं कुर्वत्यपि जैनमते स्वशत्रुविनाशरूपकार्यस्य साधकत्वात् विष्णुः तस्य मुण्डिनो धर्मस्य निर्दोषतां ज्ञापयति—'मदाज्ञया न दोषस्ते भविष्यति महामते !' इति । त्रिपुरविजयस्य गाथा कालिदासात् प्राक् एव प्रथिताऽभूत्—'शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः । संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ॥ [पूर्वमेघे ६०] किन्तु तदानीं तस्मिन् विजयप्रसङ्गे जैनमुण्डिन आख्यानस्य निबन्धनम् वैष्णवानां शैवानामपि जैनधर्मं प्रति आनुकूल्यं प्रकटयति । मुण्डिनो विष्णुनिर्मितत्वात् जैनमतस्य वैष्णवमते आंशिकविलयोऽपि व्यक्तीभवति । अत्र चेयमपरा विचारदिक् यत् शकाक्रमणकाले जैना देशारातेः साहाय्यं कुर्वन्तो लाञ्छनपदभाजोऽभवन् । अतीतायां सहस्राब्द्याम्, तेषां स्वराष्ट्रे श्रद्धां जातौ निष्ठां च दृष्ट्वा शैववैष्णवैः सह मित्रवदाचरतां जैनानां लाञ्छनक्षालनाय इदं गाथानिबन्धनं शिवपुराणे कालगतिज्ञैः विद्वद्भिः प्रक्षिप्तम् ।

एतत्सर्वमालोच्य निश्चीयते, सिद्धराजजयसिंहस्य शासनसमकाल एव शिवपुराणे रुद्रसंहितायाम् इयं जैनमुण्डिगाथा प्रणीताऽभवत् । अस्यामेव शताब्द्याम् अस्य पुराणस्य अनेके भागा अपि निर्मिता जाताः । पण्डितबलदेवउपाध्यायमहोदयाः नागरीप्रचारिणी-पत्रिकायां ६८ तमे वर्षे ३ये-४ र्थे अङ्के 'शिवपुराणवायुपुराणयोः स्वरूपनिर्णयो' नाम लेखमलिखन् । तस्मिंश्च शिवपुराणस्यार्वाचीनतां ख्यापितवन्तः । तस्मिन्नेव प्रतिपादनेऽभिमतं प्रकटयतामस्माकम् इयमपरा विचारसरणिः ।

# योगदर्शन-विमर्शः

●

श्री श्रीकृष्णमणि त्रिपाठी

विकाससिद्धान्तानुसारं सर्वेषां दर्शनानां मूलं रूपं वेदेषूपलभ्यते । ततः शनैः शनैर्विकासमुपगच्छन्ति दर्शनानि किञ्चिदभिनवरूपे दृष्टिगोचरीभवन्ति । तत्र उपनिषत्सु योगस्य वर्णनं विशेषरूपेणोपलभ्यते । ब्राह्मणारण्यकेषु निहितानां बीजानामुद्गम इह स्पष्टतया दरीदृश्यते । ततः पुराणेषु महाभारते च योगस्य महान् विकासो जातः ।

श्रीमद्भागवतस्य द्वितीयतृतीयैकादशस्कन्धेषु योगस्य विशेषतो वर्णनमुपलभ्यते । श्रीमद्भागवतस्य योगः पौराणिकयोगस्यैकमंशमात्रमस्ति । तत्रभक्त्या सहाष्टाङ्ग-योगस्य पर्याप्तं वर्णनं विद्यते । तदनुसारं वास्तविको योगी केवलः शुष्कसाधको नास्ति प्रत्युत भगवत उत्तमया भक्त्या आप्लाव्यमानहृदयः परमो भागवतोऽस्ति । योगविषये श्रीमद्भागवतस्यायं परिनिष्ठितः सिद्धान्तोऽस्ति यद् योगिनां कृते जगदाधारस्य भगवतो भक्त्यतिरिक्तो ब्रह्मप्राप्तेर्नास्त्यन्यः कश्चनोपायः ।

न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥ ३-२५-१९

भारतीयानां विदुषां मते न केवलं भौतिकसुखमेव सुखमस्ति किन्तु तन्नये आध्यात्मिकं सुखमेव वास्तविकं सुखं विद्यते । योगविद्या भारतीयमनीषिणा-मध्यात्मचिन्तनस्य सारभूतं तत्त्वमस्ति ।

## योगशब्दस्य नानार्थकता

प्राचीने भारतीयवाङ्मये योगशब्दो विभिन्नेषु व्यापकेषु अर्थेषु व्यवह्रियते यथा—(१) जीवात्मपरमात्मनोः संयोगो योगः । प्राणापानयोः संयोगो योगः (३) सूर्याचन्द्रमसोः संयोगो योगः । (४) शिवशक्तिसामरस्यं योगः । (५) जीवात्मपरमात्मनोः अद्वैतानुभूतिर्योगः । (६) पुंप्रकृत्योर्वियोगपूर्वकं पुरुषस्य स्वरूपेऽवस्थानं योगः । (७) चित्तवृत्तिनिरोधो योगः । (८) समत्वं, कर्मसु कौशलं वा योगः । (९) द्वयोर्वस्तुनोः संयोगो योगः । (१०) संख्यासंकलना योगः (११) प्रकृतिप्रत्ययसंयोगो योगः । (१२) संसारसागरतः पारगमनयुक्तिर्वा योगः ।

अतो योगशब्दो न केवलं चित्तवृत्तिनिरोधार्थकः अपितु बहुषु अर्थेषु अस्य वृत्तिः । योगशब्दस्य प्रेमार्थे प्रयोगो यथा देवीभागते—

> स्वीयान् गुणान् प्रविततान् प्रवदस्तथासौ
> तां प्रेमदामनुचकार स योगयुक्तः । ६।३।५

अस्मिन् पद्ये प्रेमरज्ज्वाकृष्टस्य निष्क्रियस्य अनन्तब्रह्माण्डनायकस्य अनेकगुणगणनिलयस्य तस्य प्रेम्णैव योगयुक्तता सङ्घटते ।

ज्यौतिषशास्त्रे सप्तविंशतिसंख्याकेषु विष्कुम्भादिषु योगेषु अपि योगशब्दो दृक्पथमवतरति । तत्रैव क्रकचामृतशब्दैः सह वर्तमानोऽयं योगशब्दः स्वस्य संहननार्थतां व्यनक्ति । आध्यात्मिकविषयमधिकृत्य योगशब्दस्यापरोऽर्थः । तथाहि वामनपुराणे—

> इत्युक्तः स तदा प्राह क्रियायोगं महात्मनाम् ।
> नराणामुपकारार्थं दुःखविच्छित्तिकारकम् ॥७।२५

अत्र क्रियायोगान्तर्गतयोगशब्दस्य समाराधनमर्थो विभाति । आध्यात्मिकाधि दैविकाधिभौतिकैः दुःखैः परिपीड्यमानस्य पुंसो दुःखविच्छित्तये परमस्य पुंसः समाराधनेन खेदात्यन्ताभावो भवतीति सुनिश्चितम् । अतएवोक्तम्—

> तमाराध्य जगन्नाथं क्रियायोगेन बाडवाः ।
> अग्नौ मोक्षं परं जग्मुस्तस्मात्तन्मोक्षकारणम् ।। ब्राह्मे पु० ६।३५

योगसूत्रे च 'योगश्चित्तवृत्तिनिरोधः' इति सूत्रयता भगवता पतञ्जलिना चित्त-वृत्तीनां निरोध एव योगपदस्यार्थं उक्तः। तेन तदा परमात्मनः स्वस्वरूपे ऽवस्थानं भवति "तदा द्रष्टुः स्वरूपेऽवस्थानम्"। १।३

योगशब्दस्य इतोऽपि व्यापकमर्थं दर्शयितुं भगवता व्यासेन श्रीमद्भागवते योगशब्दस्य ज्ञानकर्मभक्तयोऽर्थाः निर्दिष्टाः—

योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ।।११।२०।।६

अत्र योगशब्देन ज्ञानकर्मभक्तीनां त्रिकाणां बोधो भवति। एवंगीताया बहुषु स्थलेषु विभिन्नार्थे योगशब्दः प्रयुक्तोऽस्ति। योगःकर्मसु कौशलम् (२।५०) इत्यत्र कर्मकुशलतायां योगशब्दः प्रयुक्तोऽस्ति। समत्वं योग उच्यते (२।४८) इत्यत्र समत्वमर्थोऽस्ति।

इत्थं विविधप्रकरणेषु सांख्य-कर्म-ज्ञान-विज्ञानशब्दैः सह्योगं भजमानो योगशब्दः अनेकार्थतामवगाहमानः स्वार्थस्य व्यापकतामभिव्यनक्ति।

एवं सत्यपि योगदर्शनस्य योगशब्दस्य चित्तवृत्तिनिरोध एवार्थः। यतो निरुद्धचित्तवृत्तेः पुरुषस्यैव परमात्मसाक्षात्कारयोग्यता संपद्यते। अनेकासां विभूतीनामपि प्रादुर्भावो भवत्यञ्जसा। अतो योगशब्दस्य नानार्थकता स्फुटैव। शास्त्रचिन्तापरायत्तैकबुद्धिभिः स्वप्रयोजनपरवशतया यत्र यादृगर्थोऽपेक्ष्यते तत्र तादृशेनार्थेन शास्त्रतात्पर्यमवगन्तव्यम् "यत्परः स शब्दार्थः" इति न्यायात्।

## योगशब्दस्य निर्वचनम्

युजिर्—योगे इति धातोः कर्तरि घञ्प्रत्यये निष्पन्नस्य योगशब्दस्यार्थः संयोगः। करणे घञि तु तदर्थो मेलको भवति। तथा च नरनारायणयोः संयोगः, एकीकरणसामग्री वा योगशब्दार्थः। क्रियात्मकदृष्ट्या साधनस्यैव नाम योगः। एवञ्च नरस्य नारायणेन सहैक्यसंपादनाय यत्साधनमुपदिष्टं तदेव योगो नाम।

वस्तुतो योगशब्दः एकाग्रतार्थकात् युज्-समाधौ इति धातोरेव निष्पद्यते। यतो हि अष्टाङ्गयोगेषु नियमतः चित्तस्यैकाग्रता अपेक्षितास्ति। युज्यते समाधत्तेऽनेनेति करणव्युत्पत्त्या साधितस्य योगशब्दस्य नरस्य नारायणेन सह सम्बन्धे सहायकत्वाद् योगस्य अष्टाङ्गयोग एवार्थः। भावव्युत्पत्त्या निष्पन्नस्य योगशब्दस्य मुख्योऽर्थः जीवस्य ईश्वरेण सह संयोगः।

सर्वविधानां योगानां त्रिषु एषु अन्तर्भावेऽपि कुत्रचित् कर्मकाण्डस्य महिमा वर्णितः, क्वचन भक्तिकाण्डस्य प्राशस्त्यमुपदर्शितम्, कुत्रचिच्च ज्ञानस्य महत्त्वमुपवर्णितम्। तत्र गीतायाम् ३।८, ३।२०, ५।२, ६।४६ श्लोकेषु कर्मयोगस्य प्राशस्त्यम्। ६।४६, ६।३०, ११।५३, ११।५४, १२।२, १८।६ श्लोकेषु भक्तियोगस्य महिमा वर्णितः। २।४४, २।४८, २।५३, ४।३३, ४।३८ श्लोकेषु च ज्ञानयोगस्य श्रेष्ठत्वम् प्रतिपादितम्।

## गीतायोगशास्त्रम्

वस्तुतो गीतायाः प्रतिपाद्यो विषयो योग एवास्ति। अत एवोक्तं भगवता श्रीकृष्णेन "इमं विवस्वते योगं प्रोक्तवानहमव्ययम्" ४।१

सञ्जयोऽपि—व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम्।
योगं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम्॥१८।७५

एवं भगवता कृष्णेन योगस्य विधिं निर्देष्टुमर्जुनं निमित्तीकृत्य त्रिषु काण्डेषु योगस्य निरूपणं कृतमस्ति। अतो गीता योगशास्त्रमित्युच्यते।

## योगस्य भेदाः

साधनरूपस्य योगस्य विचारे क्रियमाणे शारीरिक-मानसिक-बौद्धिकाध्यात्मिकदृष्टिभिः साधकानां सामर्थ्येन अभिरुच्या वाऽनेके भेदा भवन्ति। स्वाभाविकाधारभेदेन साधनेऽपि बहवो भेदा अनिवार्या भवन्ति। अतो नरस्य नारायणेन सहैक्यसंपादकं साधनं सर्वेषां कृते समानं भवितुं नार्हति प्रत्युत स्वस्वाधिकारानुसारं साधकाः स्वीयं साधनं निश्चित्य प्रवर्तन्ते। अतः साधनरूपो योगोऽनेकप्रकारको

भवति। तत्र या साधनसामग्री नरं नारायणरूपे समुपस्थापयति सा मुख्यया वृत्त्या योग इत्युच्यते, या च साधनसामग्री तत्र सहायिकाऽस्ति सा गौणतया योगशब्दार्थः। एवं गौणमुख्यविचारेण योगेषु तारतम्यमस्ति। तथा चाधिकारभेदाद् विभिन्न-प्रकाराणां योगानां तत्तद्ग्रन्थेषु वर्णनमुपलभ्यते। तथाहि—

क्रियायोगः, समाधियोगः, जपयोगः, मन्त्रयोगः, हठयोगः, लययोगः, राज-योगः, कुलकुण्डलिनीयोगः, वाग्योगः, शब्दयोगः, अस्पर्शयोगः, साहसयोगः, शून्य-योगः, श्रद्धायोगः, प्रेमयोगः प्रपत्तियोगः, निष्कामकर्मयोगः, कर्मयोगः, अभ्यासयोगः, राजाधिराजयोगः, महायोगः पूर्णयोगः, अभावयोगः, स्पर्शयोगः, पाशुपतयोगश्च।

श्रीमद्भगवद्गीतायां च समत्वयोगः (२।४८) ज्ञानयोगः (३।३) कर्मयोगः (३।५) दैवज्ञयोगः (५।२५) ब्रह्मयोगः (५।२१) संन्यासयोगः (६।२) दुःखसंयोग-वियोगयोगः (६।२३) अभ्यासयोगः (८।८) ऐश्वरयोगः (६।५) नित्याभियोगः (६।२२) सततयोगः (१०।६) बुद्धियोगः (१०।१०) आत्मयोगः (१०।१८) भक्तियोगः (१४।२६) ध्यानयोगः (१८५२) अविकम्पयोगः (१०।७) इत्येतेषां विवेको वर्तते। मुख्ययोगानां परिचयस्तु इत्थम्—

## अस्पर्शयोगः

माण्डूक्यकारिकायां श्रीमदाचार्यगौडपादैःअस्पर्शयोगस्य समुल्लेखः कृतोऽस्ति। तदनुसारं प्रतीयते यदेषयोगोऽत्यन्तं दुर्लभोऽस्ति यतो हि साधारणोयोगी अस्पर्शयोगे प्रवेष्टुं न शक्नोति। वस्तुतोऽस्पर्शयोगोऽयं असंप्रज्ञातस्यावस्था-विशेषोऽस्ति। इन्द्रियार्थसन्निकर्षरूपेण स्पर्शेन वृत्तिज्ञानं समुदेति किन्तु बहिरिन्द्रियाणामन्तःकरणस्य च सम्यक् निरोधे या अस्पर्शावस्थाऽनुभूयते सा वृत्ति-रहितां शुद्धचैतन्यभूमिमेव सूचयति। अस्पर्शावस्थायां वायोः स्पन्दननिरोधेन नाड्यो यदाऽव्यक्ततां गच्छन्ति तदैकत्र मनोवृत्तिशून्यं जायते अपरत्र चेन्द्रियाणि निरुध्यन्ते। तदाऽऽत्मा निजस्वरूपे प्रकाशते।

## शब्दयोगो वाग्योगश्च

प्राचीनेषु आगमशास्त्रेषु वाग्योगापरपर्यायशब्द-योगनाम्ना योग-प्रणाली समुल्लिखिता। व्याकृतशब्दस्य वैखरीदशातो मध्यमामुत्तीर्य पश्यन्ती-

स्वरूपे प्रवेश एवास्य योगस्य मुख्यमुद्देश्यम् । पश्यन्तीदशातो परावस्थायाम् अव्याकृते पदे गतिस्थिती स्वभावतो नियमेन स्वत एव जायेते । अतो न ते कस्याश्चन साधनाया आन्तरिकं लक्ष्यम् । गुरूपदिष्टसाधनप्रणाल्या साधनेऽनुष्ठीयमाने यदा शब्दः सम्यक् शुद्धः संस्कृतश्च जायते तदा स दिव्यवाणी-रूपेण, सृष्टिकारिब्राह्मीशब्दरूपेण वा परिणमते । केवलमेकमपि शब्दं प्रणाल्याऽनया संशोध्य जीव ऐकान्तिकीं कृतकृत्यतामासादयति । एक एव शोधितः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति । शब्दमर्मविदो वशिष्ठादयो महर्षयः अनेनैवोपायेन अलौकिकशक्तौ अधिकृता अभूवन् ।

## अनासक्तियोगः

अनासक्तियोगस्तु गीतायां निष्कामकर्मयोग एवान्तर्भवति । अद्यत्वे यत्र तत्राधुनिकपुस्तकेषु प्रचलितः प्रचारद्वारा प्रसिद्धश्च 'असहयोगः' न योगान्तर्गतो भवितुमर्हति । यतो योगदर्शने साधनयोगमध्ये निर्दिष्टायाः गीतायामनपेक्षोदासीनशब्दद्वारा सूचिताया उपेक्षाया एव नामान्तरमसहयोगः । अतोऽयं न किञ्चिन्नवीनं वस्तु नापि योगो वक्तुं शक्यः ।

योगसाधनेन मनसोऽनेकात्मभावस्य निरसनपूर्वकं ब्रह्मभूयत्वमापद्यते । अविद्याग्रस्तो जीवः परब्रह्मतो भिन्नमिवात्मानं मन्यमानो विविधां दुःखसन्ततिमनुभवति । अंशस्यांशिनि आकर्षकं स्वाभाविकं भवति । यथोर्ध्वमाक्षिप्तो मृत्तिकांशो लोष्ठो मृत्तिकायामेव पतति तथैव ब्रह्मणोंऽशो जीवो यतो ब्रह्मणो निर्गतस्तत्र तस्य प्राप्तये भवति प्रवृत्तिः स्वाभाविकी ।

एवं किल जीवं ब्रह्मपदं प्रापयितुं पुराणेतिहासयोः यावन्ति साधनानि निर्दिष्टानि सन्ति तेषु त्रिविधो योग एवास्ति मुख्यतमः । अत एव भगवता श्रीकृष्णेनोद्धवं प्रति श्रीमद्भागवतस्यैकादशस्कन्धे मानवानां कल्याणाय त्रिविधो योगः प्रोक्तः,—तत्र विषयेषु अनासक्तस्य निवृत्तेन्द्रियव्यापारस्य संन्यासिनः कृते ज्ञानयोगस्योपदेशः, यज्ञादिकर्मकलापेषु अनिवृत्तचित्तस्य विषयाभिलाषिणश्च पुंसः कर्मप्रवृत्तये कर्मयोगस्योपदेशः, भगवतो गुणकथाश्रवणादिषु जातश्रद्धस्य नातिनिर्वि-

ण्यस्य नातिसक्तस्य पुरुषस्योपादेयत्वेन भक्तियोगो निर्दिश्यते ।—११।२०।७-८।
विभिन्नानां योगिनां रुच्यनुसारं योगस्य प्रणाली अपि विभिन्नभागेषु विभक्तास्ति । योगसाधनस्य क्रियासिद्धांशमनुसृत्य मन्त्र-हठ-लय-राजयोगसाधनं चतुर्धा विभक्तमस्ति—

मन्त्रो हठो लयो राजयोगोऽन्तर्भूमिकाक्रमात् ।
एक एव चतुर्धायं महायोगोऽभिधीयते ॥१। १२६

(१) तत्र शास्त्रोक्तानां नाममन्त्राणां जपेन भगवद्रूपाणां ध्यानेन च चित्तवृत्तिनिरोधपूर्वकं मुक्तिपथाग्रेसरणप्रकारो मन्त्रयोग: । तथा च भगवतो दिव्यानां नाम्नां रूपाणाञ्चावलम्बनेन चित्तवृत्तेः निरोधाय यावत्य: क्रिया उपदिष्टा: सन्ति ता: सर्वा मन्त्रयोगेऽन्तर्भवन्ति ।

(२) शारीरिकक्रियाकलापैः चित्तवृत्तिनिरोधतो मुक्तिमार्गाश्रयणं हठयोग: । स्थूलशरीरसम्बन्धिनीनाम् मुद्रा-षट्कर्मादि-क्रियाणामभ्यासद्वारा स्थूलशरीरे आधिपत्यस्थापनपूर्वकं सूक्ष्मशरीरे प्रभावसम्पादनाय या: क्रियासरण्यो निर्धारिता: सन्ति ता हठयोगेऽन्तर्भवन्ति ।

(३) शरीरस्थषट्चक्रभेदनद्वारा जागरितां कुण्डलिनीं ब्रह्मरन्ध्रे समुपस्थाय परमात्मनि तस्या लयो लययोग: अर्थात् मूलाधारे सार्द्धत्रिवलयाकारां सर्पवत्कुण्डलाकृतिं निद्रितां कुण्डलिनीं गुरूपदिष्टक्रियाभि: प्रबुद्धां कृत्वा षट्चक्रभेदनपूर्वकं सहस्रारे विहारिणि शिवे लयस्य यानि साधनानि उपदिष्टानि तानि लययोगेऽन्तर्भवन्ति ।

(४) केवलबुद्धिसाहाय्येन ब्रह्मविचारद्वारा चित्तवृत्तेर्निरोधं विधाय मुक्तिपदप्राप्त्युपाय: किल राजयोग: । एवं च बुद्धिद्वारा चित्तवृत्तिनिरोधस्य यावत्य: क्रियाशैल्यो निर्धारिता: सन्ति ता: सर्वा राजयोगेऽन्तर्भवन्ति ।

## उक्तयोगानां साधका:

मन्त्रयोगिन: मन्त्रमाश्रित्य जीवात्मपरमात्मनो: सम्मेलनमाकाङ्क्षन्ते । शब्दात्मकस्य मन्त्रस्य साहाय्येन जीव: क्रमश: ऊर्ध्वं गच्छन् शब्दातीते परमात्मनि

स्थानमवाप्नोति । वैखरीशब्दतः क्रमशो मध्यमामवस्थां भिन्दन् पश्यन्तीशब्दे प्रवेश एव मन्त्रयोगस्य मुख्यमुद्देश्यम् । पश्यन्तीशब्दोऽयं स्वप्रकाशमानः चिदानन्दः । चिदात्मकस्य पुरुषस्य सैव षोडशी कला । एतदेवात्मज्ञानस्य, इष्टदेवतासाक्षात्कारस्य, शब्दचैतन्यस्य वा प्रकृष्टं फलम् । अवस्थामिमामधिगतो जीवः कृतकृत्यो भवति । मूलाधारतो निरन्तरं शब्दस्रोत ऊर्ध्वं गच्छति । बहिर्मुखो जीवः इन्द्रियवशवर्ती भूत्वा विषयेष्वासज्जते । यदा योगक्रियाकौशलेन इन्द्रियाणां बहिर्गतिः निरुध्यते प्राणमनसी च स्तम्भिते भवतः तदा साधकः चेतनशब्दममुं श्रोतुं साधनं लभते । इडापिङ्गलयोर्नाड्योः गती अवरुध्य प्राणमनसोः प्रवेशे सम्पद्यमाने तदिदं सारस्वतं स्रोतोऽनुभूयते । इदमेव साधकमाज्ञाचक्रं नयति, ततश्च विन्दुस्थानं विभेद्य सहस्रारकेन्द्रे महाविन्दुं यावत्प्रापयति । सततं जीवो यं हंसमन्त्रं जपति गुरुकृपया प्राणे विपरीतभावमापन्ने स सोऽहमिति मन्त्ररूपे परिणमते ।

हठयोगिनः षट्कर्म-आसन-बन्ध-मुद्रा-प्राणायामादिषु शारीरिकक्रियासु विशेषबलं दत्त्वा देहं बलिष्ठं स्वस्थं कार्यशीलं च विधातुं प्रयतन्ते । तेषामयं विश्वासोऽस्ति यत् नित्यशुद्धबुद्धमुक्तस्वरूपं स्वयं प्रकाशमात्मतत्त्वं विशुद्धे चित्ते एव स्फुरति नान्यथा । योगक्रियाभिः मूलाधारे स्थितामनुद्बुद्धाम् कुण्डलिनीं समुद्बोध्य षट्चक्रभेदनपूर्वकं सुषुम्नानाडीपथेन प्रवाहितां कृत्वा ब्रह्मरन्ध्रोपरि सहस्रदलकमले विराजमाने परमशिवे लय एव लययोगस्योद्देश्यम् । एतदेव षट्चक्रभेदनमुच्यते ।

हठयोगस्यादिराचार्यः क आसीदिति निश्चेतुमतिकठिनमस्ति । भारतीयानामाचार्याणां सिद्धान्तोऽस्ति यत् सर्वस्यापि शास्त्रस्य प्रथमा प्रवृत्तिः परमेश्वरादेव जायते । अतः हठयोगोऽपि ईश्वरप्रोक्तः कथ्यते । हठयोगिनः कथयन्ति यत् आदिनाथो भगवान् शिव एव हठयोगस्यास्ति प्रवर्तकः । मत्स्येन्द्रनाथेन अद्भुतेन उपायेनेयं विद्या अधिगता । मत्स्येन्द्रनाथवत् गोरक्षनाथ—चर्पटीनाथ—जालन्धरनाथ–कनेरीनाथ–तुरङ्गीनाथ--विचारनाथ--प्रभृतिभिः नाथ- सम्प्रदायाचार्यैः हठयोगे निष्णातैर्भूत्वा जगत्ययं प्रचारितः ।

मत्स्येन्द्रनाथात्पूर्वमपि हठयोगः प्रचलित आसीत् । श्रूयते यत् मार्कण्डेयोऽपि योगस्यास्य साधक आसीत् । हठयोगः पूर्वं द्विधा आसीत् । एकस्य साधकः

गोरक्षनाथादयः आसन् द्वितीयस्य मार्कण्डेय--प्रभृतयः साधका आसन्, तदुक्तं। हठयोगप्रदीपिकायाम्—

> द्विधा हठः स्यादेकस्तु गोरक्षादिसुसाधकैः।
> अन्यो मृकण्डुपुत्राद्यैः साधितो हठसंज्ञकः॥

गोरक्षनाथोपदिष्टस्य हठयोगस्य षडङ्गानि, तत्र यमनियमौ न गृह्येते किन्तु मार्कण्डेयमुनिः अष्टाङ्गयोगस्य पक्षपाती आसीत्। हठयोगस्य नियमितानुष्ठानेन राजयोगः सिध्यति। अत एवाचार्या हठयोगं राजयोगस्य सोपानत्वेन वर्णयन्ति।

राजयोगिनः योगाभ्यासाय आसने विशेषं बलं ददति। हठयोगस्य सम्बन्धः स्थूलशरीरेण प्राणवायोः निग्रहेण चास्ति, राजयोगस्य च मनसा सम्बन्धोऽस्ति। यत्र हठयोगस्याभ्यासः समाप्तिं गच्छति तत्र राजयोगस्यारम्भो भवति, हठयोगी यदा प्राणवायू संयोज्य विभिन्नचक्रेषु नयति तदा तस्य सिद्धिर्भवति किन्तु राजयोगिनं संयमेनैव सिद्धय उपतिष्ठन्ते। राजयोगी मनोदेहात्मतत्त्वानि सम्यग्ज्ञात्वा स्वरूपप्रतिष्ठः सन् अन्तरिन्द्रिये बहिरिन्द्रिये शरीरे चाधिकारं प्राप्य भगवदिच्छापूर्तौ सर्वाणि यन्त्राणि संनियोज्य मुक्तराज इव विराजते। राजयोगस्य साधनाया उद्देश्यमस्ति—आत्मनो रहस्योद्घाटनं तथान्तःप्रच्छन्नायाः शक्तेरुद्बोधः। राजयोगसिद्धान्तानुसारं येन मनो जितं तेन सर्वं कर्तुं शक्यते।

तथा च मन्त्रयोगे मनःकल्पितमूर्तिध्यानम्। हठयोगे मनःकल्पितस्य स्थूलज्योतिषो ध्यानम्। लययोगे विशिष्टसाधनानि द्वारीकृत्य ज्योतिष्फलाय विन्दुध्यानम्। राजयोगे च प्रज्ञासमुत्पन्नमात्मध्यानं व्यवस्थापितम्।

# ग्रन्थ-समीक्षा

●

[समीक्षार्थं प्रत्येकग्रन्थः द्वित्वेन प्रेषणीयः]

कामसूत्रम्—[ व्याख्या—अनुशीलनञ्च ] व्याख्याकार:-श्रीदेवदत्त शास्त्री; प्रकाशक:—चौखम्बा संस्कृतसीरीज आफिस, वाराणसी—१; संवत् २०२१ वि०; पृष्ठसंख्या ७५३; मूल्यम् १६ रु० ।

कामसूत्रस्य रचना विक्रमस्य प्रथमचतुर्थशतकयोर्मध्येऽभवत् । वात्स्यायनो मल्लनागोऽस्य रचयिता । ग्रन्थोऽयं प्राचीनभारतस्य सामाजिकसांस्कृतिकस्थितेः उल्वणसंकेतोऽस्ति । बौद्धयुगे तथा ततः पूर्वस्मिन्नपि भारते नागरिकाणां यद् विलासवैभवपूर्णं सुखिजीवनमासीत्तस्यैव प्रतिफले कामसूत्रसदृशग्रन्थनिर्माणे ऋषिर्वात्स्यायनः प्रववृते ।

अस्मिन् युगे पाश्चात्त्यचिन्तकः फ्रायडः स्वस्यां मनोवैज्ञानिकविवेचनायां कामसम्बन्धिनो यान् सिद्धान्तान् प्रत्यपादयत् तेषु कतिपयान् सहस्राब्देभ्यः पूर्वमेव ऋषिर्वात्स्यायनः स्थापितवान् । प्राचीनभारते तद् युगमेव यस्मिन् कामसूत्रस्योपयोगिता तेषां कवीनामपि कृते आसीत् ये नागरिकगोष्ठ्यर्थं काव्यरचनां कुर्वन्ति स्म अथवा महाकाव्येषु ऋतु-उद्यान-पानगोष्ठीप्रभृतीनां वर्णनार्थं प्रेरणामभिलषन्ति स्म । इत्थम् कामसूत्रं काव्यशास्त्रस्यैकमङ्गमासीत् ।

भारतीयशास्त्रपरम्पराया ईदृशो महत्त्वपूर्णग्रन्थो विस्तृतव्याख्यात्मकानुशीलनेन सह प्रथमवारं प्रकाशितोऽस्ति । अस्मिन् संस्करणे मूलेन, यशोधरस्य 'जयमङ्गला'ऽभिधया संस्कृतटीकया च सह श्री देवदत्तशास्त्रिणः हिन्दीव्याख्यामयानुशीलनं प्रस्तुमस्ति । शास्त्रिमहोदयेनास्मिन्ननुशीलने भूयान् श्रमोऽकारि । शास्त्ररूपेण ग्रन्थस्य व्याख्या तु कृतैव, इतिहासस्य संस्कृतेश्च पृष्ठभूमौ कामसूत्रस्यावगमनार्थं सफलः प्रयासो व्यधायि । कानि सूत्राणि अनुगम्य ऋषिणा कामसूत्रम् निर्ममे, अनेन अनुशीलनेन तत् स्पष्टं भवति । शास्त्रिणा न केवलं व्याख्या कृता, अपि तु वर्ण्यविषयानुसारि सम्पादनमपि विहितम् । सर्वथा व्याख्येयं मूलग्रन्थं विशदीकरोति ।

कामसूत्रे सप्त अधिकरणानि सन्ति । अधिकरणानि अध्यायेषु, अध्यायाश्च प्रकरणेषु विभक्ता वर्तन्ते । प्रत्येकाध्यायस्यान्ते शास्त्रिणा तस्य सारगर्भिता समीक्षा कृतास्ति । एवम् अन्तरालपतिताः—स्त्रीराज्य-विनोद-समाजोत्सवादि-प्रसंगा विस्तारेणोपस्थापिताः सन्ति । यथा शब्दशास्त्रस्य सम्बन्धो बहुभिः शास्त्रैः सह विद्यते तथैव कामशास्त्रमपि स्वाभिज्ञानार्थमन्यानि शास्त्राण्यपेक्षते । अनेनैव सत्येन वयं शास्त्रिणो गहनानुशीलनस्य मूल्याङ्कनं कर्तुमर्हामः ।

कामसूत्रस्यैतन्महत्त्वपूर्णसंस्करणार्थं श्रीदेवदत्त शास्त्री तथा प्रकाशकः—'चौखम्बा संस्कृतसीरीज आफिस—उभौ धन्यवादार्हौ ।

—मिथ्याभेदी

**श्रीकल्याणलहरी**—लेखकः—श्रीमद्गुरुणि शम्भु भट्टः; प्रकाशकः—श्रीज्ञानविज्ञानसमन्वयसभा, बेंगलूरः—१६। पृष्ठसंख्या ३४।

पुस्तकमदः स्तोत्रसंग्रहात्मकम्। धर्म-सन्देशनामक 'कन्नड' पत्रिकायां प्रकाशितानां स्तोत्राणां समाहारोऽत्र कृतो लेखकेन। विविधेषु छन्दःसु रचितानि गणपतिदुर्गामाधवादिदेवतापरकाणीमानि स्तोत्राणि सहृदयहृदयावर्जकानीत्यत्र नास्ति कश्चन सन्देहलवः।

अस्मिन् संग्रहे शैलीवृत्तप्रयोगेषु नावीन्यं महद्रामणीयकमुपकल्पयति। पदेषु लालित्यं सारल्यं च बालानामपि निगूढभावबोधनाय कल्पते। भाषाप्रवाहस्तरस्वी यत्र पतिता व्याकरणाशुद्धिरपि दृष्टिपथं नावतरति।

—तारिणीश झाः

# आस्माकीनम्

'संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः' इत्यभिदधताऽऽचार्यदण्डिना संस्कृतं देवजातेर्भाषाऽस्तीत्यसूचि । देवजातेरनन्तरं बह्व्यो जातयोऽस्मिन् भूमिखण्डे स्वमस्तित्वमधारयन् । किन्तु तासां भाषा दुग्धे जलमिव संस्कृते आत्मसाज्जाताः । अन्यस्मिन्नर्थे संस्कृतभाषा प्रागैतिहासिककालस्य मौनेतिहासो विद्यते । पाणिनि-कात्यायनपतञ्जलिनाम मुनित्रयं संस्कृतव्याकरणं नियमबद्धं विधाय तन्मौनेतिहासं विघटनाद् ररक्ष । संस्कृतभाषा न केवलं ज्ञानविज्ञानयोर्भाण्डारं वर्तते; अपितु

जातीनामुत्थानपतनयोः कालगाथाऽपि तस्यां निबद्धाऽस्ति । परन्तु तामध्येतुं तस्याः शब्दविज्ञाने नितरां श्रमोऽपेक्ष्यते । पूर्वोक्ता महर्षयः शब्दविज्ञानस्य यां सरणिं परां कोटिं प्रापयन्, तस्याः शतांशोऽपि यद्यस्माभिः प्राप्येत तर्हि शब्द-विज्ञाने निहितमैतिहासस्यावगमे निःसंशयं क्षमैर्भूयेत ।

भक्तिदर्शनयोः प्रवाहेऽस्माकं शब्दचिन्तनस्य सरणिश्छिन्न-भिन्ना संजाता । व्याकरणादारभ्य वेदान्तसाहित्यपर्यन्तमर्थभावयोरूहापोहयोरेवास्माकं सहस्रं वर्षाणि व्यतीयुः । अधुनाऽस्माभिर्नव्यो मार्गोऽवलम्बनीयस्तथा संस्कृतभाषायाः संवत्सराणां सहस्रेभ्यः सञ्चितशब्दकोशानामैतिहासिकमुन्मीलनं कर्तव्यम् । शब्दविज्ञानसरणिमाधृत्य वयं संस्कृतभाषानुशीलनेनानेकान् महत्त्वपूर्णनिष्कर्षान् प्राप्तुं शक्नुमः, ये च विश्वेतिहासस्य कृते नवीनोपलब्धयःस्युः । परं कार्येऽस्मिन् तदैव सफलतामापादयितुं वयं प्रभविष्यामो यदा पाणिनीयव्याकरणं साधिकारं पठिष्यामः । एतदर्थमस्माकं साग्रहं निवेदनं यद् व्याकरणधुरीणा विद्वांसोऽस्यां दिशि स्वज्ञानालोकं वितन्वताम् ।

संस्कृतभाषायां निहितैतच्छब्दविज्ञानेतिहासस्योद्धाराय निःस्वार्थप्रवृत्तिरत्याव-श्यकी । यद्यस्यां दिशि निःस्वार्थभावेन प्रयत्नो न भवेत्तदाऽस्मिन् भौतिकयुगे समस्तेतिहासिकोन्मीलनमन्धकारावृतमेव तिष्ठेत् ।

दैव्या वाचः संस्कृतस्येदृशीमेव सेवां लक्ष्यीकृत्य संगमन्याः प्रकाशनं प्रारब्धम् । हर्षस्य विषयोऽयं यदस्मिन् कार्ये संस्कृतानुरागिणां पूर्णः सहयोगोऽस्माभिर्लभ्यते ।

किन्तु वयं विदुषः पुनः प्रार्थयामहे यत्तैः काले-कालेऽनुशीलनपूर्णलेखाः संगमन्यां प्रकाशनार्थमवश्यं प्रेषणीयाः । तेषां सुरुचिपूर्णलेखानामभावे संगमन्या नियमितप्रकाशनमसम्भवं स्यात् । आशास्महे सत्यां विद्वत्कृपायां संगमन्या उद्देश्ये न कश्चन व्याघातो भवेदिति ।

# श्रद्धाञ्जलिः

व्यतीतेषु दिवसेषु बलियामण्डलस्य द्वौ संस्कृतविद्वांसौ दिवङ्गतावभवताम्, संस्कृतसमाजस्य एषा महती क्षतिः। संस्कृतस्य निःस्वार्थसेवकोऽधिकारी विद्वान् सुलेखकश्च पण्डितरामाज्ञा द्विवेदी रसड़ाख्ये स्वग्रामे नश्वरं कलेवरमजहात्। समाप्तिमुपेयुषि भाद्रपदे संस्कृतस्य सुप्रसिद्ध-शिक्षाशास्त्रिणा पण्डितरामशङ्करद्विवेदिना स्वस्मिन् सुखपुराभिधे ग्रामे अशीतिवर्षवयस्यैहलौकिकी लीला समवारि। सुधिया रामशङ्करेण करव्यां, प्रयागे, लखनऊ नगरे च संस्कृताध्ययनाध्यापनपूर्णंजीवनं यापितम्। उक्तमहानुभावयोर्निधनवार्तामवगत्य तयोः शोकाकुलपरिवाराभ्यां सह समवेदनामनुभवन् संगमनी-परिवारोऽपि शोकसन्तप्तोऽस्ति। सर्वनियन्ता परमात्मा ताभ्यां सद्गतिं प्रयच्छतु—इत्येवास्माकं प्रार्थना।

# द्वितीयो विलासः

अथ वाक्यम्—

समन्वितं पदं वाक्यं लक्षकं व्यञ्जकञ्च[1] तत्।

लक्षकवाक्यं[2] यथा—

उच्चैराश्रितवत्सलोऽयममृषाभाषीति यद् गीयसे,
श्रीसिङ्गक्षितिनायकैतदधुना निर्व्यूढमेव[3] त्वया।
मद्भाग्यानि पचेलिमानि नितरामेवं सपत्नीजने-
ष्वारूढाऽस्मि चिराय तावककृपासम्भावनायाः फलम्[4] ॥१

अत्र मानवत्याः कृतापराधे दयिते चाटुवाक्यस्यासम्बद्धत्वाद् विप्रलम्भकोऽसीत्यादिः वाक्यविरुद्धो[5]ऽर्थो लक्ष्यते[6]।

व्यञ्जकवाक्यं यथा—

क्षोणीभृतां शिशिरकल्पितपादकान्तः,
श्यामोपलालनकरो नयनप्रियाङ्गः।
राजा चलेन्दुमहसामुदयानुकूले
राजा विराजति सतामुपरञ्जनाय[7] ॥२

अत्र शब्दशक्तिमूलो नायकतारानायकयोरुपमारूपोऽनुरणनध्वनिः सर्वेणैव वाक्येन प्रतीयत इति व्यञ्जकमिदम्।

---

१. व्यञ्जकं लक्षकञ्च, ख०। २. लक्षणवाक्यम्, ख०। ३. एतत्, क०। ४. पदम्, ख०। ५. वाच्यविशुद्धः, क०। ६. लभ्यते, ख०। ७. उदरञ्जनाय, क०।

अथ वाक्यदोषाः—

अपप्रयुक्तं दुस्सन्धिः व्युत्क्रमं पुनरुक्तिमत् ॥१॥
दुरन्वयञ्च वाक्याङ्गसङ्कीर्णं वाक्यगर्भितम् ।
द्वे भिन्नलिङ्गवचने, द्वे च न्यूनाधिकोपमे ॥२॥
विकलं केवलञ्चेति दुष्टं वाक्यमिहोच्यते ।
अपप्रयुक्तं[1] पदयोर्योगे यत्रापशब्दनम् ॥३॥

यथा—

राजाऽन्यो[2] हि धनान्यलञ्जनपदान्निष्पीड्य तान्यन्वहम्
पण्यस्त्रीविटचेटपात्ररनटस्तोमाय[3] संयच्छते ।
श्रीसिङ्गक्षितिपालकः पुनरयं न्यायक्रमैरर्जिता-
न्युर्वीदेवजनाय वेदविदुषे वित्तानि दत्तेतराम् ॥३

अत्र स्तोमायेत्यत्र अशिष्टस्य व्यवहारत्वाच्चतुर्थ्यर्थे तृतीयया भवितव्यम् तथापि चतुर्थी कृतिरिति सोऽयमपप्रयोगः वाक्यदोषः ।

अस्याऽपि गुणतामाहुर्विवक्षावशतः क्वचित् ।
निसर्गसुन्दरत्वेऽपि गुणदोषविवेचकाः ॥४॥

यथा—

अस्मत्कल्पलतादलानि गिलति[4] त्वत्कामगौर्वार्यताम्[5],
मच्चिन्तामणिवेदिभिः परिणमेद् दूरान्नयोच्चैर्गजम् ।
इत्यारूढवितर्दिकाः प्रतिपदञ्जल्पन्ति[6] भूदेवताः,
सिङ्गक्ष्माभृति[7] कल्पवृक्षसुरभिहस्त्यादिदानोद्यते[8] ॥४

---

१. अप्रयुक्तम्, क० । २. राजान्ये, क० । ३. 'नटनस्तोमाय' इति युक्तः पाठः । ४. दलं निगलति, ख० । ५. वध्यताम्, ख० । ६. प्रतिपरम्, ख० । ७. सिङ्गक्ष्माधिप, क० । ८. छन्दोदृष्ट्या 'सुरभी' इति पाठो युक्तः ।

अत्र कामगवीति वक्तव्ये कामगौरिति यदुक्तं तदिदम् 'गोरतद्धितलुगिति'[1] टच्प्रत्ययस्य[2] समासान्तविधिरनित्य इति अनित्यत्वादर्थप्रसादविवक्षया नाऽप-प्रयुक्तम्। तथा च महाकविप्रयोगः तीर्थकरक्रमोत्तंसनामनि महाकाव्ये—

शुभ्राभ्रङ्कषशेखरेषु विदुषां वाशेषु वाग्भासिनां,
भव्यत्वत्करुणाकटाक्षकणिकास्पर्शेन दर्शीश्वर![3]
कालं वैजननं विना फलवतीः तल्पन्ति कल्पद्रुमाः,
पङ्क्तिः कामगवाञ्च निर्भरतरं प्रस्नौति वत्सान् विना॥इति।

तथा चाहुराचार्याः—

इत्यादिशास्त्रमाहात्म्यदर्शनालसचेतसाम्।
अपभाषणवद्भाति न तु सौभाग्यमुज्झति॥इति।
अश्लिष्टकष्टाश्लीलादि सन्धि-दुस्सन्धि गीयते।

अश्लिष्टकष्टसन्धीनि[4] यथा—

कल्याणस्य इनेन्दुतुल्यमहसो अव्याजशौर्यश्रियो,
विद्विच्छ्रीभरदोग्ध्रसिद्युतियुजो धृत्या अतन्व्या उरोः।
श्रोत्रे ऊर्जितकुण्डले उरुरुचिमाद्यां कविप्रक्रियाम्,
नाश्राव्यां सहतः सुसन्धिललिते दुस्सन्धिसम्बन्धिनीम्॥५

अत्र संहिता विवक्षितेति प्रथमपादे पदानाम् अश्लिष्टसन्धित्वाद्दुस्सन्धि-त्वम्। विद्विच्छ्रीभरेत्यादिपदे श्रुतिकटुरूपा कष्टसन्धित्वाद्दुस्सन्धित्वम्। धृत्या अतन्व्या उरोरित्यत्र लुप्तविसर्गप्रायकष्टसन्धित्वाद्दुस्सन्धित्वम्। तृतीयपादे[5] प्रगृह्य-प्रायकष्टसन्धित्वाद्दुस्सन्धित्वम्। अश्लीलसन्धिर्यथा—

---

१. गोरनद्धलुगिति, क०। २. भावप्रत्ययस्य, क०। ३. नव्यत्वत्करुणाकटाक्षकणिकास्पर्शेन दर्शीश्वर, क०। भव्यत्वत्करुणाकटाक्ष०, ख०। अत्र मूलोक्तः पाठस्तु हितः। ४. सन्धिनि. क०। ५. एतावानंशः क-पुस्तके नास्ति।

पश्य प्रिये ! अन्यनृपालखड्गधारानिपाताच्चकितान्तरेण ।
सरो मग्रासीकृतसिन्धुपूरं[1] विगाढमार्तस्य कुतो विवेकः ॥६

चित्रे सकृत् प्रगृह्यादौ आद्ययोर्गुणभूमिका ॥५॥

यथा—

'विधत्ते श्रीसिङ्गक्षितिप ! कमलर्द्धेर्निधिरसौ,
समुद्रस्ते बाहुश्चकितभरितक्ष्माभृद्वनः ।
मदान्धद्वेषिस्त्रीकुचकलशकाश्मीरमकरी[2],
निरासव्यासक्तिं शिव शिव चरित्राणि महताम् ॥७

अत्र कमलर्द्धेरित्यस्य कष्टसन्धित्वेऽपि[3] कमलायाः कमलस्य च ऋद्धेरिति श्लेषनिर्वाहफलत्वात् सकृदेवेति गुणत्वम् ।

सकृदेव प्रगृह्ये यथा—

प्रज्ञाऽपि तव सूक्ष्मार्थ[4]ग्राहिणी लोचने इव ।
श्रीसिङ्गभूप ! धाटीव कीर्तिराज्ञातिलङ्घिनी ॥ ८

अत्र लोचने इवेति कष्टसन्धित्वेऽपि प्रगृह्यत्वात् सकृदेव गुणत्वम् ।

सन्ध्यश्लीलस्य सर्वत्र दुर्जनस्येव वर्जनम् ।
अस्याऽपि च गुणीभावे न ग्राह्यं नग्नदर्शनम् ॥ ६ ॥
यथायोग्यं प्रयोज्यस्य शब्दस्यार्थस्य वा क्रमः ।
विपर्यस्तो भवेद् यत्र व्युत्क्रमन्तन्निगद्यते ॥ ७ ॥

यथा—

श्रीसिङ्गभूपाल ! भवे[5] प्रभावे भीमो यथा दर्पककीचकारिः ।
आदेशनिर्वाहविधौ गुरूणां रामो यथा राघवभार्गवौ त्वम्[6] ॥ ९

---

१. मग्नासीकृत, क० । २. मकरि, क० । ३. कष्ट-कष्ट-सन्धित्वमपि, क० । ४. सूक्ष्मार्थम्, ख० । ५. भवेत्, ख० । ६. राघवभार्गवत्वम्, ख० ।

अत्र बले प्रभावे चेति सामान्यधर्मपरिगणनाक्रमवशादुपमानयोरपि तद्धर्मिणोः क्रमेणोक्तिरेव युक्तेति कीचकदर्पकारी इति वक्तव्ये व्युत्क्रमेण भणनाच्छब्दव्युत्क्रममिदम्। अत्रैव राघवादपि भार्गवस्याभ्यर्हितत्वाद् भार्गवराघवाविति वक्तव्ये तदतिक्रम्य निर्देशादर्थव्युत्क्रममिदम्।

उभयत्रापि कीचकदर्पकारी भार्गवराघवाविति च पाठो रमणीयः।

निर्विशेषविवक्षायां दुश्शङ्का व्यपनोदने।
उक्तिसंकोचसौकर्येऽप्यस्याऽपि समुपास्यता ॥८॥

निर्विशेषविवक्षायां यथा—

घटामश्वीयं वा पुरवनिमनर्घ्यानपि मणी-
नखर्वामुर्वीं वा विसृज गतिरन्या[1] समहृता।
त्वया ग्राह्यं सिङ्गक्षितिभुजि न[2] वैरं प्रियतम!
प्रियाणामस्माकं वचनमुचितं मा स्म[3] परिभूः ॥ १०

अत्र पुरदेशगजाश्वरत्नानामभ्यर्हितत्वात् पूर्वपूर्वनिर्देशः। अथवा न विसर्जनक्रियासम्बद्धादनभ्यर्हितानाम्पूर्वपूर्वमुद्देशः। एवं सति उक्तप्रकारेणातिक्रमेऽपि प्राणेश्वरसकलमपि धनं स्वामिने समर्प्य, प्राणा रक्षणीयाः। कृतमभ्यर्हिता[4]नभ्यर्हितविवेकेनेति विवक्षया शत्रुकान्ताभिरुक्तत्वाद् दुष्टत्वम्।

दुश्शङ्का[5] परिहारे यथा नायकस्यैव वंशावल्याम्—

यस्याऽद्यो विदितः[6] कुमारतिलकश्रीयुन्नवातो गुणै—
रेकस्याऽग्रजमात्मरूपविभवे चापे द्वयोरग्रजम्।
आरूढे त्रितयाग्रजं विजयते दुर्वारदोर्विक्रमे,
सत्योक्तौ चतुरग्रजं वितरणे किञ्चापि पञ्चाग्रजम् ॥ ११

---

१. अस्या, क०। २. सिङ्गक्षितिभुजेन, क०। ३. मस्म, क०।
४. एतावानंशः ख-पुस्तके नास्ति। ५. शङ्का, ख०। ६. विविधः, ख०।

अत्र कर्णादीनामभ्यर्हितत्वात् पञ्चानामग्रजश्चतुर्णामग्रजं त्रयाणामग्रजं द्वयोरग्रजमेकस्याग्रजमिति वक्तव्येऽपि संख्यापचयसूचिताप्रशस्तिप्रतीतिपरिहाराय संख्योपचयित्वारोपेणो[1]त्तरोत्तराभिवृद्धिद्योतनादक्रमोऽपि क्रमादतिसुन्दर इति गुणत्वम् ।

उक्तिसङ्कोचसौकर्ये यथा—

रामाः[2] श्रीसिङ्गभूपालश्चत्वारोंऽशा हरेः स्फुटम् ।
समौ तत्र महोदात्तौ विषमौ तु महोद्धतौ[3] ॥ १२

अत्र कृतत्रेताद्वापरकलियुगेषु भार्गवो राघवो यादव इति त्रयो रामाः श्रीसिङ्गभूपालश्चेति चत्वारो लोकरक्षापेक्षया श्रीविष्णोरंशा इत्युक्त्वा तेषु चतुर्षु प्रथम उद्धतो द्वितीय उदात्तस्तृतीयश्चोद्धतश्चतुर्थ उदात्त इति वक्तव्ये पठितप्रकारेण व्युत्क्रमेऽपि[4] समाविति द्वितीयचतुर्थयोरर्थशरदान्नपोतभूपालसंभूतयोरंशयो[5] विषमाविति रेणुकारोहिणीगर्भसंभूतयोः प्रथमतृतीययोरंशयोश्च धीरोदात्तधीरोद्धतत्वगुणसाम्यसम्बन्धानुसन्धायिना सङ्क्षेपेणोक्ति[6]सौकर्येऽपि चारुता समुन्मीलतीति गुणत्वम् ।

पदं पदार्थश्चाभिन्ने यत्र तत् पुनरुक्तिमत् ।

यथा—

हास्तिक[7]मास्तिकसेव्य ! तवेदं दुर्जनतर्जन ! सिङ्गनृपाल !
तर्जितगर्जितडम्बरमास्ते शम्बरडम्बरमेति मदाम्बु ॥ १३

अत्र डम्बरयोरेकरूपत्वात् पद[8]पुनरुक्तिः ।

भावोत्कर्षविवक्षादावस्याऽप्यादरणीयता ॥ ६ ॥

---

१. संख्येपचयद्वारेण, क० । २. राम, क० । ३. महोन्नतौ, क० । ४. उत्क्रमेऽपि, ख० । ५. अत्र क-पुस्तके 'द्वितीयचतुर्थयोरर्थ'''भूपालसंभूतयो' रित्येवं पाठः । ख-पुस्तके च मूलोक्तः पाठ उपलभ्यते । परन्त्वत्र 'द्वितीयचतुर्थयोर्दशरथान्नपोतभूपालसंभूतयो'रिति पाठ एव समीचीनः प्रतीयते । ६. संक्षेपोक्ति, क० । ७. हास्तिक, ख० । ८. पद इति नास्ति ख-पुस्तके ।

यथा—

दयोदधे ! त्वं नः पाहि पाहि नः करुणाम्बुधे !
पोष्या वयं न विद्वेष्याः सिङ्गभूपाल ! पालय ॥ १४

अत्र करुणाम्बुधे ! दयोदधे ! इत्यत्र पुनरुक्तिः । पाहि नः पाहि नः इति शब्दपुनरुक्तिः । तदुभयमपि शत्रुसम्बन्धिकाविग्रहकारिगतदैन्यातिशयविवक्षायां न दुष्यति किन्तु स्वार्थातिशयं पुष्यतीति गुणत्वम् ।

दूरत्वा[1]न्वययोग्यानां यत्र स्यात्तदुरन्वयम् ।

यथा—

श्रीसिङ्गक्षितिपालसङ्गरतलेष्वङ्गानि दृष्ट्वा द्विषा-
मातङ्केन समन्ततः किलकिलारावेण वैतालिकाः ।
कान्ताखण्डविखण्डतां परिगतान्युच्चण्डखड्गाहते-
र्घोराः कङ्ककुलाकुलेषु चकिताश्चिन्वन्ति मिन्वन्ति च ॥१५

अत्र कङ्ककुलाकुलेषु सङ्गरेष्वित्यनयोः, आतङ्केन चकिता इत्यनयोः किलकिलारावेण घोरा इत्यनयोः वैतालिका दृष्ट्वेत्यनयोरतिप्रत्यासत्तिकाङ्क्षिणोर्दूरदूरा विघटना दृश्यते । सेयम[2]न्वयाऽवसरे सरसमानसं दुःखभाक् करोतीति[3] दुरन्वयम् दुष्टम् ।

गुणकक्ष्या परिक्षेपः[4] क्वचिदस्याऽपि दृश्यते ॥१०॥

यथा—

दोग्धारः पालयां केचित् गोपालाश्चक्रिरे गवाम् ।
सा परं सिङ्गभूपेन चरितार्था वसुन्धरा ॥१६

अत्र पालयाञ्चक्रिरे इति वक्तव्ये पालयां केचित् गोपालाश्चक्रिरे इति

१. दूरतो, क० । २. नेयम् , ख० । ३. सरसमानसं दुःखाकरोति, ख० । ४. परिक्षेमः, क० ।

दुरन्वयेऽपि व्यवहितमपीच्छन्ति केचिदिति विशेषाप्युत्पादनाद्गुणत्वम् ।

**स्मृतं वाक्याङ्गसङ्कीर्णमन्यवाक्याङ्गसङ्गतम् ।**

यथा—

**खड्गानापृच्छ्य[1] निर्यान्ति वधूराकृष्य धुन्वते ।**
**दिवं मुञ्चन्ति यान्ति क्ष्मां सिङ्गभूपालविद्विषः ॥१७**

अत्र वधूरापृच्छ्य[2] निर्यान्ति, खड्गानाकृष्य धुन्वते । क्ष्मां मुञ्चन्ति दिवं यान्तीति वक्तव्ये वाक्ययोः परस्परपदसङ्करः कृत इति वाक्याङ्गं सङ्कीर्णमिदम् ।

**वाक्यं वाक्यादिके तच्च गुणीभावेन[3] भाव्यते ॥११॥**

यथा—

**वाचामीश ! सुरेश ! दैवतगुरो ! त्वामप्यजैषीत् किल ,**
**प्रज्ञायामनपोतसिङ्गनृपतिस्सत्त्वे तदैरावतम् ।**
**दाने कल्पतरून् जिता वयममी तत्साम्प्रतं साम्प्रतम् ,**
**भोगे स्वामिनि निर्जिते त्वयि यथा राजा तथा हि प्रजाः ॥१८**

अत्र वाचामीश दैवतगुरो त्वामप्यजैषीदित्येकं वाक्यम् । सुरेश ! वयं जिता इत्यपरम्प्रतिवाक्यम् । तयोरंशभूतसम्बुद्धिपदसंकरेऽपि वाक्योपवाक्यत्वान्न दोषः ।

**तद्वाक्यगर्भितं यस्य गर्भे वाक्यान्तरस्थितिः ॥**

यथा—

**कृतान्तदंष्ट्राक्रूराय खड्गाय तव भूपते !**
**के हि शङ्कामदान्धानां तिष्ठन्ते शत्रुभूधराः[4] ॥१९**

अत्र नायकतद्खड्गाय शत्रुभूपास्तिष्ठन्त इति वाक्यस्य गर्भे हि शङ्कामदान्धानामिति वाक्यान्तरमविकलं स्थितमित्येतदिदं वाक्यगर्भितम् ।

---

१. आपृच्छ्य, क० । २. आपृच्छ्य, क० । ३. गुणभावेन, ख० ।
४. भूवराः, ख० ।

इदं सहृदयाह्लादि स्वावस्थासूचनादिषु ॥१२॥

यथा—

सख्यश्चन्द्रमुखो निषिञ्च चरणौ मन्दाकिने चन्दनम्,
पद्माक्षः सखि ! पद्मके[1] मधुकरौ पद्मेन निर्वापय[2] ।
स्मेरश्रीर्नय शारिकां चतुरिके ! दूरं दुरालापिनीम्,
श्रीसिङ्गो हृदयङ्गमो मम परः किं जल्पितैः कल्पितैः ॥२०

अत्र हे सख्यः ! चन्द्रमुखः पद्माक्षः स्मेरश्रीर्नायको मे हृदयङ्गमो नायक इति वाक्यस्य निषिञ्च चरणावित्यादिना[3] सखि पद्मके मम इत्यादिना नय शारिकामित्यादिना वाक्यत्रयेण प्रतिपादितं गर्भितत्वेऽपि नायिकायाः नायकगुणसङ्कीर्तनक्रमसमारूढसंपातोद्वेगादिलक्षणकामावस्थातिशयसूचकत्वेन सहृदयाह्लादनाद् गुणत्वम्।

यत्रोपमा भिन्नलिङ्गा भिन्नलिङ्गन्तदीरितम् ।
तद्भिन्नवचनं यत्र विभिन्नवचनोपमा[4] ॥१३॥

यथा—

शास्त्रादेव[5] शितौ प्रज्ञा हंसीव विशदं यशः ।
तव सिङ्गमहीपाल ! शशीव रुचिरा तनुः ॥२१

अत्रोपमानोपमेययोः भिन्नवचनत्वं विभिन्न[6]लिङ्गत्वञ्च स्पष्टम् ।

गुणीभवेद् द्वयमिदं यत्रोद्वेगो न धीमताम्[7] ।

यथा—

प्रज्ञाऽपि तव सूक्ष्मार्थग्राहिणी[8] लोचने इव ।
श्रीसिङ्गभूपधाटीव कीर्तिराज्ञातिलङ्घिनी ॥२२

---

१. क-ख-पुस्तके पद्मकी इति पाठः; स च प्रकरणविरुद्धः । २. निर्वापयन्, क० । ३. चरणादिना, ख० । ४. विभिन्नवचनोपमौ ख० । ५. शस्त्रादेव, क० । ६. विभिन्न, इतिपदं ख-पुस्तके नोपलभ्यते । ७. धीमता, ख० । ८. सूक्ष्मार्थम्, ख० ।

अत्र लोचने इव प्रज्ञेत्युपमानोपमेययोर्लिङ्गवचनभेदेऽपि सूक्ष्मार्थग्राहिणीति विशेषवचनक्लेशवैचित्र्यकृतिसामर्थ्येन[१] सहृदयानामुद्वेगो न भवतीति गुणत्वम् ।

यत्र न्यूनत्वमाधिक्यमुपमानविशेषणैः ॥१४॥
लक्ष्येते[२] ते क्रमेणैव ज्ञेये न्यूनाधिकोपमे ॥

न्यूनोपमं यथा—

विभाति सिङ्गक्षितिपस्य मौलिश्छत्रेण चामीकरकुम्भकेन ।
मानोन्नतं[३] शृङ्गमिवोदयाद्रेः सम्पूर्णबिम्बेन सुधाकरेण ॥२३

अत्र चामीकरकलशोपमानस्य कस्यचिदपि धर्मस्य सुधाकरविशेषणत्वेनानुक्तत्वात् न्यूनोपममिदम् ।

अधिकोपमं यथा—

सिंहासने राजति सिङ्गभूपो भुजान्तरे चञ्चलतारहारः ।
नवप्रवालोज्ज्वलदीर्घगुच्छः तटे[४] सुमेरोरिव कल्पवृक्षः ॥२४

अत्रोपमेयपद्मरागेष्वनुक्तेषु तदुपमानस्य नव[५]प्रवालस्याधिक्यादधिकोपमानम् ।

प्रसिद्धेरनुमानाच्च गुणतामनयोर्द्विधा ॥१५॥

न्यूनोपमगुणीभावो यथा—

भुजया कम्पितोत्तालकरालकरवालया ।
भासते सिङ्गभूपालो भद्रश्रीरिव शाखया ॥२५

अत्र करवालोपमानस्य कृष्णादेरनुपादानान्न्यूनोपमत्वेऽपि[६] वसन्ति चन्दने कृष्णसर्पा इति रूढेरनतिक्लेशेन तत्प्रतीतिरिति न[७] दुष्टत्वम् ।

---

१. विशेषवचनाश्लेष, क० । २. लक्ष्यते, ख० । ३. मनो, क० । ४. तटत्, क० । ५. कच, क० । ६. न्यूनोपमा, क० । ७. न, ख-पुस्तके नास्ति ।

अधिकोपमानस्य[1] यथा—

हारावली विलसिता विलसद्दुकूला,
वाराङ्गनाः क्षितिपतेर्वशयन्ति चेतः ।
ज्योत्स्नाविसारविशदा विकचोत्पलाभा,
राका निशा इव विराजितलोलताराः ॥२६

अत्र नीलोत्पलग्रहणादधिकोपमत्वेऽपि वारविलासिनीकटाक्षविक्षेपयोरविनाभावविज्ञानपरिणतान्तःकरणानाम् उपमानोद्घटनानुपमानादनतिप्रयासेन[2] कुवलयोपमेयानांकटाक्षविक्षेपाणां प्रतीतिरिति गुणत्वम् ।

छन्दोयति[3] क्रियाद्यैस्तु विकलं[4] विकलं विदुः ।

तत्र छन्दोविकलं यथा—

अव्यादव्याजसौभाग्यवामभागो महेश्वरः ।
कलाविदां वरेण्यन्तु सिङ्गभूपालशेखरम् ॥२७

अत्र तृतीयाक्षरविकलत्वाच्छन्दोविकलमिदम् ।

अन्यत्र संस्कृतादस्य[5] गुणताल्पाऽपि[6] गण्यते ॥१६॥

यथा—

सिरिसिङ्गभूअदिट्ठुणोजसभर गङ्गप्पवाह मज्झम्मि
परिह्लअणसमद्धं तल्लोके हेयमरि सुंदम् ॥२८

अत्र तृतीयपादे द्वितीयवर्णस्य संयोगपूर्वत्वात् गुरुत्वेन छन्दोवैकल्येऽपि प्राकृतादिषु संयुक्तवर्णानां ह्णएवाकारलपकारादीनां तीव्रप्रयत्नोच्चारणेन पूर्वलघुत्वं कैश्चिदिष्टमिति गुणत्वम् ।

---

१. अधिकामस्य, क० । २. अनुमानादित्युचितम् । ३. यदि, ख० । ४. विकटम्, क० । ५. अन्य, ख० । ६. आदि, ख० ।

यतिविकलं यथा—

नित्यन्तोयधि[1] मणिमेखलां धरित्रीं
श्रीसिङ्गक्षितिभुजि[2] रक्षितुम्प्रवृत्ते।
विद्वेष्यान् भजति वनिपतावनीपान्
मित्राणि स्फुटमवनिपतावनिपान् ॥२९

अत्र तृतीयस्थाने[3] यतौ कर्तव्यायां प्रथमपादे तथा न कृतमिति यति-विकलमिदम्।

स्वरसन्ध्यनुभावेन गुणीभूतमिदं मतम्।

यथा—

श्रीसिङ्गक्षितिपाल ! तावकचमूधाटी भयाटङ्किता[4]
नाकोरैरपि शाबरैरपि हितान् घोराङ्गणे पक्कणे।
आत्मीयैव हि पश्यतां पिशुनय[5]त्याबालगोपालकम्,
भूपालान् कुलिशातपत्रकलशीचिह्ना[6]पदानान्ततिः ॥३०

अत्र द्वादशस्थाने कर्तव्यायां यतौ तृतीयपादे तथा न कृतमिति वैकल्येऽपि स्वरसन्धिनिमित्तत्वान्नदोषः।

क्रियाविकलं यथा—

चतुरङ्गरिपुव्यूहनिबर्हणपटीयसा।
भूपाल ! तव खड्गेन विपदो मानगर्विताः ॥३१

अत्र नामशेषिक्रियान्त इति न विद्यते तेन क्रियाविकलमिदम्। एवं कारकादिविकलमप्यूह्यम्।

इममस्त्यादिसापेक्षं समर्थं वा गुणीभवेत् ॥१७॥

---

१. तोयद, ख०। २. भुरि, ख०। ३ स्याने, क०। ४. टीकिता, ख०। ५. पिशुनति, ख०। ६. कलसीचिह्न, क०।

यथा—

रामा श्रीसिङ्गभूपश्च चत्वारोंऽशा हरेः स्फुटम् ।
समौ तत्र महोदात्तौ विषमौ तु महोद्धतौ ॥३२

अत्र प्रथमार्धे[१] भवन्तीत्यपेक्षायान्तदन्तर्भावेन वैकल्येऽपि यत्रास्य क्रियापदन्नास्ति तत्र अस्तिर्भवति[२] हिं प्रथमपुरुषे प्रयुज्यत इति अनुशासनाद् गुणत्वम् । द्वितीयार्धे[३] क्रियाभावेऽपि उदात्तादिगुणसम्बन्धद्योतकनिष्ठान्तत्वेन निराकाङ्क्षत्वात् समर्थकत्वमिति गुणत्वम् ।

केवलं त्वनभिव्यक्तं चमत्करणकारणम् ।

यथा—

आन्दोलिकायामासीनमायान्तं राजवर्त्मनि ।
स्त्रियः पश्यन्ति राजानं पुरः पश्चात् परिच्छदम् ॥३३

अत्र गुणादीनाञ्चमत्कारकारणानामस्फुटत्वेनाप्रतीतेर्जाति[४] मात्रवत्तिष्ठतीति केवलमिदम् ।

तत्केवलच्छान्दसानामाशीरादौ गुणीभवेत् ॥१८॥

यथा—

सर्वे ग्रहास्सनक्षत्रास्तव श्रीसिङ्गभूपते !
भवन्त्येकादशस्थानफलदा वरदास्तथा[५] ॥३४

यथा च—

अमी वेदिं परितः[६] क्लृप्तधिष्ण्याः समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो[७] दुरितं हव्यगन्धैर्वैतानास्त्वां वह्नयः पावयन्तु ॥[८]

---

१. प्रथमार्थे, क० । २. आशी, ख० । ३. द्वितीयार्थे, क० । ४. प्रतीते, ख० । ५. तदा, ख० । ६. चरितः क० । ७. अवघ्नन्तो, क० । उवघ्नन्तो ख० । ८. अभिज्ञानशाकुन्तलस्यायं श्लोकः (अङ्कः ४।८) ।

इत्यादावस्फुट[1] चमत्कारहेतुत्वेन केवलत्वेऽपि शुद्ध[2] श्रोत्रियस्य कण्व-महर्षेराशीर्वादवाक्यत्वाद् ग्राह्यत्वम् ।

इतिवाक्यदोषगुणविचारः ।

इतिसरससाहित्यचातुरीधुरीणविश्वेश्वरकवीन्द्रचन्द्रप्रणीतायां
श्रीसिङ्गभूपालकीर्तिसुधासारशीतलायां
**चमत्कारचन्द्रिकायां**
द्वितीयो विलासः ।

# तृतीयो विलासः

अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्योऽपि च विविच्यते ।
अभिधावृत्तिगम्याऽर्थो जात्यादिर्वाच्य ईरितः ॥१॥

यथा—

दानेन कर्णो दयया दिलीपो नयेन काव्यो विनयेन रामः ।
यदि प्रसिद्धिं दधताममीभिः श्रीसिङ्गभूपो निखिलैः प्रसिद्धः ॥१

अत्र सर्वेषां पदानां जात्यादिवाचकत्वादर्थस्य वाच्यत्वं प्रतीयते ।

लक्षणावृत्तिः गम्याऽर्थो लक्ष्य इत्यभिधीयते ।
लक्ष्यार्थस्तु चतुर्थो[1] वाच्यान[2]न्वयेन तत्रैव ॥२॥

समवेतस्संयुक्तः संबन्धिसदृश इत्युक्तः ।

तत्र समवेतो लक्ष्यार्थो, यथा—

राजन्यके[3] प्रतिभटे प्रतिजन्यरङ्गे
[4]रुद्रं प्रकाशयति ते करवालरेखा ।
श्रीसिङ्गभूपचकिते शरणागतेऽस्मिन्
पद्मेक्षणं विवृणुते हि कटाक्षरेखा ॥२

अत्र रुद्रशब्दो मुख्यार्थे स्खलद्गतिः तेन रुद्रेण[5] विना भूतस्य शत्रुसंहरण-सामर्थ्यरूपस्यार्थस्य लक्षणया विवक्षितत्वात् समवेतलक्ष्यार्थत्वम् ॥

---

१. अत्र 'चतुर्धा' इति युक्तः । २. वाच्यार्था, ख० । ३. राजन्येक, ख० । ४. रन्ध्रं, ख० । ५. रुद्राणाम्, ख० ।

संयुक्तलक्ष्यार्थो यथा—

नाना दिगन्तजयिनं[1], स्वपुरप्रवेशे
श्रीसिङ्गभूपमनुभावितराजशब्दम्[2] ।
सौधाङ्गणानि परितो जयशब्दपूर्व—
माचारलाज—कुसुमाञ्जलिमुत्किरन्ति[3] ॥३

अत्र सौधाङ्गणानामचेतनानां पुष्पाञ्जलिपरिक्षेपासम्भवात्पुरे सौधबाहुल्य-विवक्षया तत्सङ्गता पौराङ्गना लक्ष्यन्ते[4] इति संयुक्तलक्ष्यार्थत्वम्[5] ।

विरोध्यविरोधकभावादिरमुख्यः संबन्धः । ( तद्वासंबन्धि यद्वा ) ।[6]

श्रीसिङ्गक्षितिपालकः प्रयतते यद्यत्समाटीकितुम्[7]
तत्तत्पूरयितुं चिरेण नियतिर्बद्धव्रता तिष्ठति ।
अस्मासु प्रतिकूलतान्तु जहति भूयाः कृतार्थोद्यमा,
जायेरंश्चिरजीवनि प्रवसतामस्माकमालिर्गिरा ? ॥४

अत्र नियत्या भिन्नानां[8] रिपुभूपतीनामेनां प्रति चिरञ्जीवनी[9] भूया इति आशिराशंसासङ्गतेरभावात्तद्विरुद्धः शापरूपाऽर्थो लक्ष्यते। आदि शब्दा-दवयवावयविभावसंबन्धादिः ।

यथा—

ग्रीष्मो निश्वसितेषु लोचनयुगे वर्षाशरद्गण्डयोः,
हेमन्तः स्वसखीमुखेषु शिशिरोऽप्यालेपने वस्तुनि ।

---

१. जयनं, ख० । २. राजशब्द, ख० । ३. उत्तिरन्ति, क० । ४. लक्ष्यते, क० । ५. लक्षणार्थत्वम्, क० । ६. अत्र यथा इति आवश्यकः । ( ) एतावानंशः स्पष्टो न भवति । ७. समाटकितुम्, क० । ८. भि, इत्यधिकः क० । ९. अत्र क-ख पुस्तके श्लोके 'चिरजीवनि' इति पाठः, व्याख्यायां क्रमेण 'जीवनि', 'जीवनी' इति वर्तते । मन्मते 'चिरजीविनी' पाठोऽत्र युक्तः ।

# SAṄGAMANĪ

**Sanskrit Quarterly Magazine**

●

Edited by
**Prabhat Shastri, Sahityacharya**

●

Annual Subscription
Rs. Twelve only
Rs. 3/50 per copy
[ IN FOREIGN ]

●

Published by Prabhat Shastri for Sanskrit 'Sahitya Parishad, Daraganj, Allahabad—6 (India) and Printed by him at Nagri Press, Daraganj, Allahabad—6 (India)

सम्पादन-समज्या

श्री बालकृष्णराव: (प्रयाग:) ❖ डॉ० हरवंशलाल शर्मा (अलीगढ़:)

डॉ० विद्यानिवास मिश्र: (गोरखपुरम्)

लक्ष्यं योजना च

- इयं 'संगमनी' संस्कृतस्य निःस्वार्थसेवाया नामान्तरम्।
- अस्यां संस्कृतवाङ्मयविषये गवेषणापूर्णलेखानां परिचर्चायाश्च प्रकाशनम्,
- संस्कृतभाषाया अप्रकाशितग्रन्थस्य मुद्रणम् च भवति।

अनया संस्कृतवाङ्मयस्य संस्कृतभाषायाश्च प्रचाराय प्रसाराय च प्रयत्नो विधीयते।

# संगमनी

# Saṅgamanī

Sanskrit Quarterly

●

**संस्कृत-त्रैमासिकी**

प्रथमवर्षे तृतीयोऽङ्कः

शिशिरर्तुः, २०२२ विक्रमाब्दः

●


सम्पादकः

*प्रभात शास्त्री*

सहसम्पादकौ

*तारिणीश झाः*
व्याकरणवेदान्ताचार्यः

*जयशङ्कर त्रिपाठी*
साहित्याचार्यः, एम्० ए०


●


प्रयागस्थ-*संस्कृत-साहित्य-परिषदः* प्रकाशनम्

कार्यालयः
*संगमनी*
दारागंजः—प्रयागः

वार्षिकं मूल्यम्
५.०० रु०
प्रत्यङ्कम् १.५० रु०

# शिशिर-अङ्कः



●

# संगमनी

अहं राष्ट्री संगमनी वसूनाम्

—ऋग्वेदे १०।१२५।३

१ वर्षे • संवत् २०२२ वि०, शिशिरर्तुः • ३ अङ्कः


## अष्टमूर्ति-स्तवः

•

१

वहसि शिरसि सुभगे सकलं जनभारम्,
श्रम - जल - लव - रहितमस्वेदमपारम् ।
शङ्करधृतधरणीरूप ! विरचय शर्म जने ॥

२

क्षपयसि निजनिवहे विहरज्जनपापम्,
दिनकरदहनविहितमपि तापम् ।
शङ्करधृतसलिलशरीर ! विरचय शर्म जने ॥

३

प्रसरसि भुवनतले कृततिमिरविनाशम्,
अत्सि च हुतमपि हेतिविलासम् ।
शङ्करधृतहुतवहरूप ! विरचय शर्म जने ॥

४

चरसि जगति वितते बहिरन्तरपावन,
पवन - विजित - खगपतिपरिधावन !
शङ्करधृतमारुतरूप ! विरचय शर्म जने ॥

५

रविशशिरुचिरुचिरे चक्रं शिशुमारम्,
त्वयि विचरति सत्वरतरचारम् ।
शङ्करधृतगगनशरीर ! विरचय शर्म जने ॥

६

मुञ्चसि निजसमये सलिलं लसदोघम्,
सङ्ग्रहमपि रचयसि च न मोघम् ।
शङ्करधृतदिनकररूप ! विरचय शर्म जने ॥

७

निखिलौषधिनिकरे चिरममृतमुदारम्,
वर्षसि निशि रुचिरं शुचिसारम् ।
शङ्करधृतहिमकररूप ! विरचय शर्म जने ॥

८

वेदवादिवितते रुचिरुचिता - यागे,
तव कल्पितविविधाऽमरभागे ।
शङ्करधृतयज्ञशरीर ! विरचय शर्म जने ॥

९

श्रीकविरामकृते मधुमधुरे गीते,
मुदमुद्वह सदयश्रुतिनीते ।
शङ्करविधृताऽष्टशरीर ! विरचय शर्म जने ॥

—अप्रकाशित-'गीतगिरीश'-काव्यात्

# रूपकषट्कस्य प्रणेता महामात्यो वत्सराजः

श्री बालशास्त्री
एम्० ए०, साहित्यरत्नम्

इह खलु जगत्यवतीर्य मानवः स्वानुभूतिविचार-संस्काराणां परिष्करणञ्चदा कथञ्चारभतेति मीमांसायां साक्षिभूतान् पुरावृत्तपरिपूर्णान् पुराणग्रन्थानुद्धृत्य तेषु च प्रामाण्येन प्रामुख्येन च कलायाः सहयोगमेवामनन्ति मान्याः। प्रतिपादितञ्च खलु नृशास्त्र-सम्पादकैर्यत्कलाकाररूपमेवाङ्गीकृत्यावतरन्नरो जन्मसहोत्पन्नां कलाभिरुचिं, विस्मरन्नप्यखिलमन्यन्न विस्मृतवान्।

सेयञ्चकला ललितोपयोगिकलादिनाम्ना द्विविधं विभाजनं बिभर्ति। तयोस्तु ललितकला, तत्रापि च विद्याचतुष्टयनिष्यन्दभूतं काव्यं प्रशस्ततममूरीक्रियते। तच्चापि पुनः खलु दृश्यश्रव्यभेदेन द्विविधम्। तत्र च नाट्य-नाटक-रूपकाभिधेयैरभिलप्यमानं दृश्यम्। छन्दोबद्धं श्रव्यम्। दृश्यं हि श्रव्यादर्थपेक्षया रमणीयतरमभिमन्यते काव्यरहस्यकोविदैः सुकुमारधियामपि तस्य सद्यः प्रभावकारित्वात्।

भारतीयनाट्यकलेयं स्वातन्त्र्येणास्मिन्नेव राष्ट्रे प्रादुर्भावविकासाभ्यां सहोत्कर्षस्य परां कोटिमवगाहमाना वरीवर्ति स्मेति विश्ववाङ्मयमनुवीक्ष्य विमृशन्ति विद्वद्वरेण्याः। नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेणेति नियममनुसृत्यैवोत्तरोत्तरं विकासं प्राप्तवत् संस्कृतरूपकम् कालक्रमेण क्षीणतामभजत्। तत्र च वैदेशिकाक्रमण-नगरादि-दहन-ग्रन्थभ्रंशनादीन् हेतूनुपन्यस्यन्ति पुरावृत्तविदः। परं तत्रान्ये विप्रतिपद्यन्ते। संस्कृतरूपकह्रासस्यापरमपि निदानं

तैरिदमनुमातुं प्रस्तूयते यत् मध्ययुगस्य विशुद्धभारतीयसंस्कृतिसंस्कृतद्वयस्येतिहासस्यात्र विकृतिपूर्णाभिव्यक्तिरेव । वस्तुतत्त्वेषु विमृश्यमानेषु विदितं भवति यत् ख्रिस्ताब्दीय ६५० तमादारभ्य १३०० तमावधिकः पूर्वमध्यकालिको भारतस्येतिहासो याथातथ्येन नाद्यावधि विश्वपटलेऽविकलमाकलय्य प्रस्तुतः । तात्कालिक्यः राजनीतिप्रवृत्तयस्तदुत्थानावनतिरहस्योक्तयः सांस्कृतिकधार्मिकादानप्रदान-पद्धतिमाधारीकृत्याऽऽविष्कृता सरलता सहृदयता सुहृत्ता इत्यादयो यथावत् सम्यग्रूपेण नैवावभान्तीतिवृत्तपृष्ठेषु ।

युगमिदमधिकृत्येतिवृत्तसामग्रीकणिकाः विद्यमाना अपि पाण्डुलिपिशिलालेख-प्रशस्ति-ताम्रपत्र-दानपत्रमुद्रादिरूपाः देवागार-जैनभाण्डागार-राजकोषागार-विद्वज्जनागारेषु जीर्णशीर्णवेष्टनेषु वेष्टिताः कीटभक्ष्यतामुपगताः श्वासानामन्तिमाङ्कणनामिवावहन्तीति दृष्ट्वा स्मारं स्मारं वेपते हृदयम् सीदन्त्यङ्गानि । अनयावस्थित्या भारतस्य शौर्यस्यादम्यपौरुषस्य प्रतिभासिक्तायाः सांस्कृतिकसाहित्यिकप्रतिभायाः स्वरूपमेव चक्षुष्मतां लोचनागोचरीकृतम् ।

अपहाय जातिवर्गदेशादिभावनां तत्त्वजिज्ञासया अवमृश्यमाने भूयोभूय इदमेवावगम्यते यद् युगेऽस्मिन् मध्याह्वये न केवलमेतादृशो राजवंशप्रभवाः महानुभावा अजायन्त ये प्राणान् पणीकृत्यापि राष्ट्रस्य स्वाभिमानं संस्कृतिं सभ्यतां साहित्यञ्चैव पोषितवन्तः अपि तु नैके इतरेऽपि तथैव त्यागिनो विरागिणो देशानुरागिणो धनिनः कविकर्मकुशला विद्याविलासिनः साहित्यमर्ममनीषिणो धर्मधिषणा अबीभवन्, यैः परिवर्तितो देशस्येतिहासः, परं न खलु तेषां तत्र नाम्नापि आभासः । बहवो धर्मधुरीणा वंचनाविहीना मंत्रिणोऽभवन् ये शौर्यातिशयेन बुद्धिवैभवेन कर्मकौशलेनाभिवर्द्ध्य राज्यसीमानमेव न केवलं संरक्षितवन्तः अपि तु धर्मं धारयन्तः साहित्यसाधकान् समाश्रयन्तः कलामाकलयन्तः स्वयमपि साहित्यसर्जनं सम्पादितवन्तः । येषां च व्यक्तित्वकृतित्वयोः सापेक्षं ज्ञानं प्रकाशिताप्रकाशिताभिस्तत्कृतिभिरेव सुलभम् । संस्कृतनाट्यसाहित्यप्रपञ्चे रसपरवशवाणीवत्सलो महामात्यः कविराजो वत्सराजोऽपि तेष्वन्यतमो विलक्षणो विचक्षणो रूपककार इति सर्वसम्मतम् ।

[1]सम्प्रति महामात्यवत्सराजकृतित्वेन गायकवाडप्राच्यशोधग्रन्थमालायां वटोदरतः (G.O.R.J. Boroda) प्रकाशतां नीतानि स्वर्गतैः डाक्टरविरुद-भाग्भिः श्रीचिमनलाल डी० दलालमहोदयैः सम्पादितानि षट् रूपकाणि समुपलभ्यन्ते, तानि यथा—

१. किरातार्जुनीयव्यायोगः २. कर्पूरचरित-भाणः ३. रुक्मिणीहरण-ईहामृगः ४. त्रिपुरदाहडिमः ५. हास्यचूडामणिप्रहसनम् ६. समुद्र-मथनसमवकार इति।

कविवरभासमतिरिच्य[2] न केनापि कविना इयन्ति विविधविषयविभूषितानि रूपकाणि विरचितानि। यैः[3] कैश्चित् प्रमाणाभावेऽपि रूपकाणामष्ट संख्या निर्दिष्टा, तन्निर्मूला।[4]

संस्कृतसाहित्ये वत्सराजेत्यभिधानमतीव श्रवणसुभगं प्रथितञ्चित्ताकर्षकञ्च। मन्यामहे यद्[5] विदितयशसां नैकनृपति-मंत्रि-सेनापति-अमात्य-कवि-विद्वद्-विरुदभाजां वत्सराजानामभिधया सुपरिचिता एव साहित्यसुधास्यन्दिनः सहृदयवृन्दाश्च। एवं च सत्सु बहुषु वत्सराजेषु कोऽयं रूपककारो महामात्यो वत्सराजः कदा कतमं भूभागं वंशं वै स्वजनुषा विभूषयामासेति स्वाभाविकी जिज्ञासा। नाम-साम्येन चात्र विभ्रमविक्षुब्धाः पाण्डित्यमण्डिताः कोषेतिवृत्तविबुधाःबहुधा अद्यावधि विप्रतिपद्यन्ते।

---

१. 'रूपकषट्कम्'—भूमिका पृ० ५ गा० ओ० सी. बड़ोदा नं० ८ सन् १९१८।

२. द्विजेन्द्रनाथ शास्त्रीकृत – 'संस्कृत-साहित्य-विमर्शः' पृ० ६१६।

३. श्री वाचस्पति गैरोला 'सं० साहित्य का इतिहास'।

४. डॉ० व्ही० राघवन् एवं आचार्य बलदेव उपाध्याय।

५. श्री नगेन्द्र नाथ वसु—'हिन्दी विश्वकोष' भाग २० पृ० ५५६ सन् १९२९। सिद्धेश्वर शास्त्री चित्राव 'चरित्र-कोष' प्रथम भाग पृ० ५०९, द्वितीय पृ० ७२२। विलियम मोनियर 'संक्रृत इंग्लिश-डिक्शरी' पृ० ९१६, सन् १९६०।

संस्कृतवाङ्मयमनुवीक्ष्य कृतेऽनुशीलनेऽद्यावधिसंख्याका ये वत्सराजा: श्रुतिस्मृति-पथमायान्ति ते च इत्थम्—

प्रथमस्तावत् कविताकामिन्या: हासस्य कविवरभासस्य प्रतिज्ञायौगन्धरायण-स्वप्नवासवदत्तयो: रूपकयोश्चरितनायको वत्सराज[१] उदयन: सुप्रथित:। संस्कृतसाहित्यें चन्द्रवंशीयममुमेवाऽधिपमाधारीकृत्य[२] विनिर्मितानि बहुविधानि नाटकनाटिकागद्यपद्यकाव्यानि[३]। सोऽयं भूपति: शशास वत्सदेशम्, कौशाम्बी च नाम्नी नगरी अस्य राजधानी, ख्रिस्तपूर्वीये षष्ठशतके जनि लेभे इति विद्वत्तर्क-निष्कर्ष:। केचन गौतमबुद्धस्यामुं समसामयिकं साधयितुमुत्सहन्ते[४]।

ख्रिस्ताब्दीयाष्टमशतकस्य पूर्वार्द्धेऽपि अवन्तीननुरंजयन् आकर्ण्यते कश्चिन्नराधिपो वत्सराज:[५]। अस्मिन्नेव काले प्रतिहारवंशावतंसो[६] वत्सरा-जोऽधिराज: शुशुभे। श्रूयते च यस्य सुत: मार इव सुकुमार: कुमार इव विक्रमा-दित्यो विक्रम इवारिश्रृंगाय नागो नागभट्टोऽद्वितीयो द्वितीय:। अन्ये तु केचिदिति-

---

१. भास—'प्रतिज्ञायौगन्धरायण' 'स्वप्नवासवदत्तम्'।

२. 'वाचस्पत्यम्' पृ० ४८४४।

३. 'रत्नावली' 'कथा-सरित्सागर' 'अवन्तिसुन्दरीकथा' 'प्रतिज्ञायौगन्ध-रायण' सुबन्धुकृत 'वासवदत्ता'।

४. 'हिन्दी विश्वकोष' पृ० ५५६

५. सिद्धेश्वर शास्त्री चित्राव 'प्राचीन चरित्र कोष' पृ० ५०९।

(अ) डा० गुलाब चन्द्र चौधरी पॉलिटिकल हिस्ट्री ऑफ नार्दर्न इण्डिया फ्राम जैन सोर्सेस पृ० २४, २९, ३१, ३३।

(ब) डॉ० मुजुमदार पृ० १६९।

६. डा० गुलाबचन्द्र चौधरी P. H. N. I. History and culture of the India peopl, Vol II page 577.

सिद्धेश्वर शास्त्री चित्राव—प्राचीन चरित कोष पृष्ठ ५०९।

केशवचन्द्र मिश्र 'चन्देल वंश और उनका राज्यत्वकाल' पृ० ४८, ५९, ६०।

हासज्ञास्तर्कानुपस्थाप्य स्वमतेषु अवन्तिवत्सराज-गुर्जरप्रतिहारवत्सराजयोर[1]भेदमेव प्रत्यतिष्ठिपन् ।

भोजप्रबन्धनिबन्धको वल्लालः[2] कविवरस्तु धाराऽधिपतिमुंजपरमारामात्यमेकं वत्सराजमामम्नौ । अयमेव वंगाधीश्वरविरुदभाग् भोजवधाय नियुक्तो मुंजेनेति प्रत्यपादि वल्लालेन । अतः खिस्ताब्दीयदशमशतककालिकः किंचिदनन्तरभावी वाऽयम् इति पुरावृत्तज्ञानां विचारसरणिः ।

चौलुक्यकुलेन्दुराजो वत्सराजः[3] लाटप्रदेशान् समलञ्चकार खिस्ताब्दीयदशमशतकादिमे भागे । उदयनसुन्दरीकथाकारः सोड्ढलाभिधः कलाकारः लाटाधिपस्यास्यैव राजसभां व्यभूषयत् ।

एकादशशतकस्योत्तरार्द्धे धाराधीशस्य भोजस्यापि पुत्रो वत्सराज[4]-संज्ञक आसीदिति जनश्रुतिः ।

---

१. डॉ० गुलाब चन्द्र चौधरी, P.H.N.I. page 33, 35, 39.

२. (अ) भोज-प्रबन्ध : बल्लाल-कृत : पृ० २ से १० तक

(ब) History of classical Sabskrit literature by M. M. Krishnamachiriar page 500.

३. हिन्दी-विश्वकोष पृ० ५५६ ।

(अ) कृष्णामाचारीयर 'H.C.S.L. पृ० ४७६ ।

(इ) सिद्धेश्वर शास्त्री चित्राव —'प्राचीन चरित्रकोष' पृ० ५०६

(ई) श्री के० एम्० मुन्शी—The Struggal far empire, page 74, 171.

४. डॉ० गुलाब चौधरी 'P.H.N.1. पृ० ६७, १०८ ।

अस्यैव ख्रिस्तस्यैकादश्यां शताब्द्यां किंचिदनन्तरं वा चन्देलवंशावतंसस्य महोत्सवपुराधिपस्य कीर्तिवर्मणो मन्त्रिवरो वत्सराजो[1] बभूव। महीधरात्म[2]-जेनानेनैव वत्सराजेन कीर्तिदुर्गो निर्मापित:, विक्रमाब्दे ११५४ तमे वर्षे च सोपानानां समूहश्च[3]। कालञ्जराधीश्वरस्य परमर्दिदेवस्य सुप्रसिद्धोऽमात्यप्रवर: सल्लक्षण अस्यैव कीर्तिवर्मणो मंत्रिणो वत्सराजस्य[4] पौत्र इति पुरातत्त्व-विबुध-सम्भावनास्पदम्।

विश्वकोषकारा: श्रीनगेन्द्रनाथवसुमहोदया: चौहानवंशेऽपि वत्सराज[5] नामको राजनायक: कश्चित् प्रादुरभूदिति सङ्केतयन्ति।

महाकवि-जगनिक-कृते आल्हा-संज्ञके देशभाषा-ग्रन्थरत्ने आल्हावीर-शिरोमणे: पितृव्य:, मलखानस्य पिता, दक्षराजस्य भ्राता वत्सराजो[6] वच्छराजो वेति बहुचर्चित:। जगनिकमतमनुसरन्नयं परमर्द्दिदेवसमय एव युद्धमवगाह्-मानो मृत्युमालिलिङ्ग इति निर्वर्णयन्ति इतिहासज्ञा:। अत: रूपकषट्कस्य रचयितुर्वत्सराजस्यामुना सहाभेद-कल्पना जल्पनामात्रमेव प्रतीयते, रूपकषट्कस्य

---

१. 'हिन्दी विश्वकोष' पृ० ५५६।
　(अ) The struggal for empire edited by K. M. Munshi 58.
　(ब) केशव चन्द्र मिश्र—'चन्देल वंश और उनका राज्यत्वकाल' पृ० ११०।
२. 'रूपक-षट्कम्'—भूमिका पृ० ६।
३. 'खर्जूर वाहक' दामोदर जयकृष्ण काले-कृत।
४. 'रूपकषट्कम्'—भूमिका पृ० ६।
५. 'हिन्दी विश्वकोष' पृ० ५०६।
६. (अ) 'संस्कृतम्' अयोध्या श्री कालीप्रसाद त्रिपाठि-सम्पादितम् २६-२-६३।
　(आ) 'आल्हा' नर्बदाप्रसाद गुप्त-कृत।
　(इ) 'रूपकषट्कम्'—भूमिका पृ० ६।
　(ई) 'बसु—' 'हिन्दी विश्वकोष' पृ० ५५६।

निर्मातुः वत्सराजस्य परमर्द्दिदेवोत्तराधिकारिणः त्रैलोक्यवर्मणोऽपि शासने विद्यमानत्वात्[१]।

ख्रिस्ताब्दीये १६४१ तमे वर्षे वाराणसी-दर्पणाऽमरकोश-टीकाकारो रामाश्रम-शिष्यो राघवत्रिपाठिनस्तनूजो वत्सराजोऽपि[२] श्रुतिपथमायाति। सम्भाव्यते चैतद्यत् पद्यवेण्यां[३] ग्रथिता भणितिरस्यैव मुखपद्मा‌द् विनिःसृता स्यात्।

श्रीवसुमहोदयानां मते तु कश्चिन्निर्णयि-दीपिकाया रचनाकारो वत्सराजः[४] संस्कृतवाङ्मये ख्यातिं लब्धवान्। तथैव च कथाशेषतामुपलब्धस्य कस्यचिद् भोजप्रबन्धस्य निबन्धको वत्सराजो[५] रराजेति व्याहारः प्रवर्तितो दरीदृश्यते।

जल्हणेनापि स्वकीय - सूक्तिमुक्तावली ( १२५७ ई० ) कश्चित् कविराजो वत्सराजः समुट्टङ्कितः। परं तत्कृतित्वेनोद्धृतस्य पद्यस्य रूपकषट्के

---

१. 'रूपकषट्कम्' पृ० १ 'किरातार्जुनीयव्यायोगे।

२. (अ) सिद्धेश्वरशास्त्री चित्राव, पृ० ५०६।
　(आ) 'बान्धवनरेशों के संस्कृत काव्य' डॉ० राजीवलोचन अग्निहोत्री।
　(इ) 'हिन्दी विश्वकोष' पृ० ५५६।
　(ई) कृष्णमाचारियर 'H. C. S. L.' (C. C. I. Page 106)।

३. पद्यवेणी डॉ० जे० बी० चौधरी कलकत्ता पृ० ६६, ११६, १३५।

४. वसु—'हिन्दी-विश्वकोष' पृ० ५५६।

५. (अ) 'कृष्णमाचारियर' History of Classical Sanskrit literature Page 502.
　(ब) Shri Aufrecht's 'Catalogus Catalogorum' Part I leipzig p. 418.

दर्शनाभावादन्य एवैषो रूपककाराद् वत्सराजाद् वत्सराज इति विचारकाणां विचारसरणि: ।[1]

असीत् कश्चित् प्राचीन एकः कविर्वत्सराज[2] इत्यादि सूचितवन्तः श्रीनगेन्द्र-वसुमहोदयाः ।

अनुवीक्ष्य सर्वान् साम्प्रतं कांश्चनात्मनो निष्कर्षानुपच्छन्दयामि—केषांचित् प्राचामनुरोधो यद् रूपक-षट्कस्य रचयिता वत्सराज एव निर्णयदीपिकायाः भोज-प्रबन्धस्य चापि निबन्धक इति, किन्तु कष्टकल्पनयानुमित्या गमितो निर्णय एष अनुरोधमात्रेणैव सप्रपञ्चं सपरिकरं प्रमाणमन्तरा हृदयङ्गमः कर्तुं न सुशकः ।

पुरावृत्तविदः हास्यचूडामणि-विनिर्मातारं वत्सराजं ११६५-१२२५ ई० पर्यन्तं निश्चिन्वन्ति । अस्य च पश्चिमभारतस्य गुर्जरप्रान्ते शतोत्तरत्र्यशीति-(१८३) पृष्ठालङ्कृतानि हस्तलिपिप्रणिबद्धानि षड् रूपकाणि प्राप्तानि । तान्या-धारीकृत्य प्रथमं गायकवाडप्राच्यशोधग्रन्थ-मालायां (G.O.R.I.) बटोदरतः १९१८ तमे खिस्ताब्दे षड्रूपकाणां संकलनात्मकं रूपकषट्कमिदं ग्रन्थरत्नं प्रकाशितमभूत् । तत्र च प्रकाशितायां रचनायामस्यां निर्णयदीपिका-भोजप्रबन्ध-वाराणसीदर्पणादि-ग्रंथाभाव एव निराकरोति श्रीनगेन्द्रनाथवसुभिरुपन्यस्तान-खिलान् स्वपक्षमुपपादयितुं तर्कान् ।

तथा च, नहि कदापि कुत्रापि कैश्चिदपि समीक्षक-प्रवरैः निर्णयदीपिका-हास्यचूड़ामणिग्रन्थयोः प्रणेता तत्रभवान् महामात्यो रूपकषट्ककर्ता वत्सराज एवेति उल्लेखांशोऽपि नाम्ना कृतोऽवलोक्यते । न चान्यानि हास्यचूड़ामणिलेखकस्य वत्सराजस्य कर्तृत्वेनोपोद्बलकानि प्रमाणानि लोचनगोचरतामागतानि, यैः प्रव्यक्तं तेषां वत्सराजकृतित्वमवगम्यते ।

श्री जल्हणसूक्तिमुक्तावली वत्सराजकविविरचितं पद्यमेकं प्रमाणपुरःसरं प्रपद्य विप्रतिपद्यन्ते केचिद् यत् वत्सराजः केवलं षड्रूपकाणामेव प्रणेता न भवितुमर्हति ।

---

१. श्री. सी. डी. दलाल, 'रूपक षट्कम्'—भूमिका ।

२. 'हिन्दी विश्वकोष' पृ० ५५६ ।

किन्तु महर्षि-भरत-भारतीमनुसृत्य दश रूपकाणि आदर्शरूपोपेतानि विनिर्मितान्यनेनेति सम्भवेयुः। कराल-काल-कवलितानां चतुर्णां मध्ये वर्णित एवाभाणकः कश्चिज्जह्लणेन संकलितः स्यादिति, किन्तु बहिरङ्गान्तरङ्गोभयप्रमाणादृते कष्टकल्पनेयं न मनागपि श्रद्धेयपद्धतिमधिरोहति सुतराम्।

अपरं च यद्यपि भोजप्रबन्धस्य कस्यचिद् ग्रंथस्य वत्सराज-कृतित्वम् श्री आफ्रेक्ट-महोदयैरपि समर्थितमवलोक्यते तथापि डा० श्रीराघवन्महोदयानां मते हास्यचूडामणिप्रणेतरि वत्सराजे भोजप्रबन्ध-निबन्धके वत्सराजे च नाभेदप्रतीतिः। रूपकषट्क-संकलने प्रस्तुतायां हास्यचूडामणि-प्रहसनस्य प्रस्तावनायां पारिपार्श्विकस्येयम् पदावली परिपुष्णाति चामुमेवार्थं यदसौ परमर्द्दि-देवनृपतेर्महामात्यपदवीमलञ्चकारेति। कालञ्जराधीशपरमर्द्दिदेवमहामात्यकृते षण्णां रूपकाणाम् अद्यावधि एतावन्मात्रोपलब्धे संग्रहे प्रकाशतां गतेऽपि तत्र भोजप्रबन्धसम्बन्धः असम्बद्ध एव प्रतीयते।

तत्रापि च श्री आफ्रेक्ट, डा० कृष्णामाचारियर, डा० दलाल, आचार्यबलदेव उपाध्याय—प्रभृतिभिः सद्धृतां संविदमधिष्ठाय विमृश्यमाने इदमेवावगम्यते यत् कालञ्जराधीश्वरश्रीपरमर्दि-त्रैलोक्यवर्मणो महामात्यपदमलङ्कुर्वन् तद्विद्वद्गोष्ठीगणगणनागौरवमावहन्, रत्नपालकवेः पितामहत्वं, हरिपालस्य पितृपदमधिकुर्वन्, रसपरवशवाणीवत्सलो वत्सराजः अन्य एव कविवरेण्यः पूर्वोपदिष्टेभ्यः कविविद्वदमात्यश्रेष्ठेभ्य इति निश्चप्रचम्।

अन्तरङ्ग-बहिरङ्गोभयविधसाधनैर्वत्सराजमहामात्यस्य परमर्द्दिदेव-त्रैलोक्यवर्मदेवयोः कालनिर्णयमाधारीकृत्य ११६५-१२२५ ईस्वी-पर्यन्तं स्थितिकालो बोद्धव्य इति पुरावृत्तविदो विपश्चितामपश्चिमाः समालोचका विवृण्वन्ति। ११६५ तमे ख्रिस्ताब्दीये वर्षे स्वपितामहे मदनवर्मणि कथाशेषतां गते राज्यसिंहासनेऽभिषिक्तः परमर्द्दिदेवः ईस्वी १२०३ तमे वर्षे शिवधामाङ्गणातिथिर्बभूव। ततश्च त्रैलोक्यवर्मदेव एव तदुत्तराधिकारीति सर्वसम्मतं मतम्।

बहवो विद्वांसः कविममुं ब्राह्मणं[1] साधयितुमुत्सहन्ते, केचन पुनः जैनमिति[2]। प्रस्तुवन्ति स्वस्व-मतं प्रतिपादयितुमनेकान् तर्कान्। किन्तु वत्सराजस्य श्री परमर्द्दि-देवस्य त्रैलोक्यवमणश्चामात्यत्वात् चन्देलवंशीयनृपसदसि च ब्राह्मणानामेवा-मात्यपदे[3] नियुक्तेः जन्मना चासौ ब्राह्मणः खल्विति तु अपेत-सन्देहम्।

वैदेशिकाक्रमणाऽभ्राऽऽच्छादिते भारतीयेतिहासदुस्तराकाशे यैर्जाज्वल्यमानैः राजवंशनक्षत्रैः संस्कृत-संस्कृतेश्च श्रीवृद्धि विधाय स्वकीयानुपमा भा समुद्भासिता, तेषु चन्देलवंशीयाः मूर्धन्या एव। तैश्च प्रतिपालितायाम् इलायां विन्ध्य-महोत्सव-कालञ्जरादि-जाङ्गले तिष्ठतो यस्य कस्यापि भावावेशोत्कर्षस्य निराकरणम-सम्भवमेव। अस्यामेव भावनायां भावितस्य मनुपुत्रस्य कृतसंकल्पस्य, स्थितप्रज्ञस्य खड्गो लेखनी च युगपदेव विपक्षि-विसर्जनं साहित्य-सर्जनं च कृतवत्यौ। शस्त्रे शास्त्रे च नदीष्णत्वमभिवीक्ष्यामात्यपदे नियुक्तो वत्सराजोऽपि अस्मिन्नेव विन्ध्य-मेखला-मण्डिते तत्परिसरकान्तारे समुत्पन्नः शिक्षितः सम्मानितो बभूव। नात्र कश्चित् सन्देहलेशावसरः। अस्य कवेः प्रकृतिवर्णनपरः स्थानीय-वचनोपन्यास-युक्तः रचनाविलासोऽपि वत्सराजस्य कालञ्जर-तत्परिसरजनपदीयत्वमेव द्रढयति।

सोऽयं नाट्यकला-कुशलः हृदयहारिण्याः वाण्याः चरित्रचित्रणस्य प्रकृति-वर्णनस्य राजनीति-दर्शनस्य चरमसीमानमवगाहमानो धुरन्धर आचार्यो वत्सराजोऽद्वितीय आसीत् इति विद्वद्-वितर्क-विमर्शः।

तदीयरचनासु प्रयुक्ताः—घटनापाटवं, भावभङ्ग्युत्कर्षः, अन्तर्निगूढाभि-व्यंजना, स्थानीय-प्रयोगादयः, चित्रिताः पुरातनपरम्पराः, सरला विकटसमास-

---

१. श्री देवदत्त शास्त्री— व्यक्तिगतपत्रे।
मुनिपुण्यविजय— ,, ,,
डॉ० ज्योति स्वरूप जैन—,, ,,
नेमि चन्द शास्त्री— ,, ,,

२. श्री सिद्धेश्वर शास्त्री चित्राव 'मध्ययुगीन चरित्र कोष' पृ० ७२२।

३. केशवचन्द्र मिश्र—'चन्देल और उनका राज्यत्वकाल' पृ० १४६।

भूयस्त्व-विधुरा सुमधुरा वाग्धारा चापि समर्थयन्त्येवास्य सत्कवित्वं रचना-कौशलञ्च ।

एतेषु रूपकेषु शिवस्य श्रेष्ठत्वम्, अर्जुनस्य मुक्तिभुक्तिस्थितिः, रुक्मिण्याः लावण्यम्, कुमारस्य शौर्यम्, शौरेः महिला-भावनैपुण्यम्, नारदस्य कलिप्रियत्वम्, समुद्रस्य वदान्यत्वम्, कविनामुना वैशद्येन प्रपञ्चितम् ।

रूपकोपनतानि पद्यानि सुभाषितानि च सुतरां प्रतिपन्नानि सहृदय-हृदय-संवेद्यानि । समुपश्लोकितं चास्य समसामयिकं समाज-दर्शनं तथा परिहास-चुम्बितं किमपि मर्मस्पृग् वर्णनं कं सहृदयं न खलु आवर्जयेत् ।

वत्सराजस्य शैली सरला, पदविन्यासः प्रौढः प्रलम्ब-समास-रहितश्च । हृदयङ्गमा भावभङ्गी, विषयोपन्याससरणिश्चानितरसाधारणी । नूनमेतत्सर्वं रूपककारस्य वत्सराजस्य गौरवशालित्वमभिव्यनक्ति ।

●

## काव्यमार्गस्याभिमानः

●

अज्ञात - पाण्डित्य - रहस्यमुद्रा
ये काव्यमार्गे दधतेऽभिमानम् ।
ते गारुडीयाननधीत्य मन्त्रा
न्हालाहलाऽऽस्वादनमारभन्ते ॥

—*मङ्खकस्य*

# पाणिनि-पद्धतौ स्त्री-समादरः

दर्शन-केशरी
श्रीगोपाल शास्त्री

(प्रविशतो ललिताप्रसादभोलादत्तौ)

ललिताप्रसादः—कथं भोलादत्त ! किमेवं दण्डायसे ? पाणिनिमुनेः स्त्रीणां सम्बन्धेऽभिप्रायं ब्रूहि—

भोलादत्तः— शृणु, पद्यं पुरातनं वच्मि—यन्मया वृद्धेभ्यः श्रुतमस्ति ।

"अहो ! स्त्रीणां प्रभावोऽयं यत्पाणिनिमुनिर्हृदा ।
तासां समादरं कुर्वन् पुरः स्त्रीप्रत्ययानधात् ।"

पश्य सखे ! शब्दतः प्रत्यय-सर्जने चतुर्थाध्याये प्रथमे पादे सर्वतोऽप्यग्रे स्त्रियाम् ४।१।३। इत्यधिकार आयाति । तत एव शब्दतः प्रत्यया आरभ्यन्ते । ते च पूर्वं स्त्रीप्रत्ययाः पश्चात् तद्धिताः प्रत्ययाः तद्धिताः ४।१।७६ इति सूत्रत आरभ्यन्ते । अन्यच्च स्त्रियामिति सूत्रस्याधिकारावधिं समर्थानां प्रथमाद्वा ४।१।८२ इतिसूत्रोद्देशं 'समर्थानाम्' इति यावदित्येवं ब्रुवन् श्लेषमहिम्ना समर्थानामेव स्त्रियामधिकारो नासमर्थानाम् इत्यपि सूचयति ।

ललिताप्रसादः—साधु-साधु सखे ! साधु तर्कितं त्वया । पूर्वं सुबन्तसृष्टावपि ङ्याप् प्रातिपदिकात् ४।१।१ इति प्रथमाऽधिकारसूत्रे

प्रातिपदिकात् ङ्यापोः पृथक्करणम् तयोश्च अभ्यर्हितत्वादल्पाच्त्वाद्वा पूर्वनिपातकरणम् इत्यादि सर्वमपीदं तस्य स्त्रीसमादरातिशय-सूचकमेव ।

भोलादत्तः—आम् आम् ! इदं च सर्व-प्रत्यक्षं पश्य । पुंलिङ्गशब्दा ये ह्रस्वाकाराः तेऽपि स्त्रियां गत्वा दीर्घाकारा जायन्ते । यथा—अजः (ब्रह्मा) अजा (प्रकृतिः), शिवः (शम्भुः), शिवा (भवानी) इन्द्रः (शक्रः) इन्द्राणी (शची) इत्यादयो गुरुत्वशालिनः स्त्रीलिंगाः शब्दाः पाणिनिकृतं स्त्रीसमादरं सूचयन्ति ।

ललिताप्रसादः—साधु सखे ! साधु, साधु वदसि । मन्ये मनुरपि पाणिनिप्रकर्षं प्रदर्शयितुमेव पूर्वमेवमेव स्त्रीणामभ्यर्हितत्वं धर्मतः सूचितवान् । तथाहि—

उपाध्यायान् दशाचार्य्य आचार्य्याणां शतं पिता ।
सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते ॥

भोलादत्तः—अथ किम् ! पश्य, कात्यायनोऽपि 'अभ्यर्हितं च इति वार्तिकं विधाय माता च पिता च मातापितरौ, सीता च रामश्च सीतारामौ इत्यादिषु स्त्रीवर्गस्य अभ्यर्हितत्वात् पूर्वनिपातं वक्ति ।

ललिताप्रसादः—अयि सखे ! व्याकरणप्रवर्तकः शिवः अर्द्धनारीश्वरो गीयते । तदनुगोऽयं पाणिनिरपि तु स्वग्रन्थस्य 'अष्टाध्यायी' इति स्त्री-लिंगमेव नाम कृतवान् । अन्यच्च त्रिषु न्यायाधीशसूत्रेषु विप्रतिषेधे परं कार्यम् १।४।२। पूर्वत्रासिद्धम् ८।२।१ असिद्धवदत्राभात् ६।४।२२ इति सत्स्वपि तेभ्यः सर्वेभ्योऽपि अभ्यर्हिताम् 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परिभाषारूपां स्त्रियमेव सर्वोच्चन्यायाधीशपदे प्रतिष्ठाप्य स्त्रीसमादरातिशयं करोति ।

भोलादत्तः—किं सखे ! किमिदं त्वयोपक्षिप्तम् ? न मया विस्पष्टं ज्ञातं, स्फुटं बोधय ।

ललिताप्रसादः—अयि सखे ! किम् अत्र अन्तर्हितं विद्यते । मनाङ्मनोयोगं देहि—'भव + अन्ति' इति प्रयोगे अतो गुणे ६।१।९७ इति सूत्रापेक्षया अकः सवर्णे दीर्घः ६।१।१०१ इति परस्मै सूत्राय दत्तमपि विप्रतिषेधे परं कार्यम् १।४।२ इति न्यायधीश-सूत्रेण विजयम् इयं स्त्रीरूपा 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति उच्चन्यायाधीशपदासीना परिभाषैव अपाकृत्य अपवादरूपाय अतोगुणे इति सूत्राय ददातीति कीदृक् स्त्री-वर्गस्य समादरः पाणिनिप्रक्रियायां विद्यते तं निभालय ।

भोलादत्तः—अहो अधुना मया ज्ञातम् । इयं परिभाषा तु पूर्वत्रासिद्धम् ८।२।१ इति न्यायाधीशदत्तमपि विजयमपाकरोति ।

ललिताप्रसादः—कस्मिन् प्रयोगे ? इति दर्शय । तदा जाने तेऽपि पाण्डित्यम् ।

भोलादत्तः—अत्र किं पाण्डित्यम् । इदं स्पष्टं विद्यते । विश्वसृज् + सु इत्यत्र यदा चोः कुः ८।२।३० इति सूत्रं प्रवर्तयति पूर्वत्रा-सिद्धम् ८।२।१ व्रश्चभ्रस्जसृजमृज० ८।२।३६ इति परं सूत्रम् असिद्धीकृत्य तदैवेयं परिभाषा स्त्रीरूपा उच्चन्यायाधीशपदासीना समेत्य अपवादं व्रश्चभ्रस्जसृजमृज० इति सूत्रं प्रबलं कृत्वा नियो-जयति इति महति आस्था स्त्रीसमादरे पाणिनिमुनेः ।

ललिताप्रसादः—अस्तु, सखे ! पाणिनिमुनेः स्त्रीसम्बन्धे तु त्वया साधु विवृतः समादरः । सम्प्रति प्रसक्तानुप्रसक्ततयाऽन्येषां कालहरणं न वरम् इत्यपसरामो वयम् । (इति निर्गतौ)

# भक्ति-कौस्तुभः

डा० रामशङ्कर भट्टाचार्यः

*[ अस्ति कोऽपि षड्विंशतिसूत्रात्मकः सांख्यीयभक्तिप्रतिपादकः परमभक्तिसूत्र-नामा ग्रन्थः । स च स्वामि-हरिहरानन्दारण्य-नाम्ना यतिना प्रणीतः । तस्य सूत्राणां पद्यमयी वृत्तिः डा० रामशङ्कर भट्टाचार्य-महोदयेन विरचिताऽभूत् । सेयं 'भक्ति-कौस्तुभ' नामधेया रचना वर्तते । सम्पादकः ]*

अष्टाङ्गयोगसन्दीप्तं मैत्र्यादिभूतिभूषितम् ।
निरोधख्यातिवैराग्यशीलं श्रीकपिलं नुमः ॥ १

सर्वज्ञमीश्वरं शान्तं सांख्ययोगौ तथागुरून् ।
अनन्यशरणैर्नौमि मनोवाक्तनुभिर्मुहुः ॥ २

सर्वार्थसिद्धिदा भक्तिरिति यज्ज्ञापितं पुरा ।
लघ्वनुशासनं तस्याः क्रियते शास्त्रयुक्तितः ॥ ३

सर्वविद्याप्रतिष्ठा सा ब्रह्मविद्या प्रकीर्तिता ।
अनादिः सहजा पूर्णा दुःखत्रयविनाशिनी ॥ ४

चित्तस्वभाववैचित्र्याद् गुणवृत्तिविरोधतः ।
'मयि दुःखं व्यक्तयोगाद्' इति धीः सर्वप्राणिषु ॥ ५

पादकण्टकतत्त्राणज्ञानवान् वै यथा क्षमः ।
भेदजदुःखनाशाय तथैवात्र निबोधत ॥ ६

तत्त्वज्ञानं भवेद् भक्त्या तथा स्यादात्मनि स्थितिः।
अलं सा दुःखनाशार्थमिति तस्या विचारणा ॥ ७

रुचिभेदविभक्तानां साधकानां सदातनी।
रतिर्बोभूयते लक्ष्ये भक्तितत्त्वानुवर्तनात् ॥ ८

'यस्य देवे परा भक्तिः 'श्रद्धावान् भजते' त्विति।
'ईश्वरप्रणिधानाद् वे' त्यादि शास्त्राणि चात्र नु ॥ ९

महापुरुष-संस्था या चित्तस्येष्टा स्थितिप्रदा।
भक्तिः सा सर्वतीर्थानां शीर्षेषु परिकीर्तिता ॥ १०

द्वावेव पुरुषौ युष्मदस्मत्प्रत्ययगोचरौ।
तत्र भक्तिरियं साध्या शास्त्रन्यायोपलब्धिभिः ॥ ११

ऐश्वर्ययुक् चात्मबाह्यो युष्मत्प्रत्ययगोचरः।
अस्मत्प्रत्ययगम्यो यः स प्रत्यक्चेतनः स्मृतः ॥ १२

चित्तस्य स्थितिरेवात्र गृह्यते भक्तिसाधने।
न सा वृत्तिप्रवाहः स्यादव्याप्तिदोषदर्शनात् ॥ १३

त्वंपदगोचरे संस्था सहजा कर्मयोगिनाम्।
मत्पदगोचरे संस्था ज्ञानिनां स्थितचेतसाम् ॥ १४

बाह्याद् योगं प्रावहन्ति युष्मदर्थाश्रिता बुधाः।
अन्तश्चित् प्रत्ययख्यात्या ये त्वस्मत्प्रत्ययाश्रिताः ॥१५

भजने त्वं पदार्थस्य साध्या चानन्यवृत्तिता।
सर्ववृत्तिनिरोधेन भक्तिः स्यात्प्रत्यगात्मनि ॥ १६

ईश्वरे तदधीनेषु पूज्येषु चानुलोम्यतः।
महत्त्वख्यापिका संस्था त्वंपदार्थस्य पूजनम् ॥ १७

दृशिमात्रः प्रत्यगात्मा प्रतिसंवेदको धियः।
तमेवाश्रित्य या संस्था सा भक्तिः प्रत्यगात्मनः ॥१८

कैवल्यसाधिका सेयं संस्थोक्तं कविभिः पुरा ।
ब्रह्मसंस्थोऽमृतत्वं च मत्संस्थामधिगच्छति ॥ १९

अस्त्यासक्तिर्लौकिकानां दृष्टानुश्रविके सुखे ।
तत् सुखं प्राप्यते भक्तया सा योग्यविषया यदि ॥ २०

अपि च व्यक्तचित्तेन यच्च सौख्यमयं पदम् ।
इष्यते, प्राप्यते तच्च योग्ये निष्पादिता यदि ॥ २१

अपवर्गो द्रष्टृदृश्यविवेकः शाश्वतः शमः ।
सेधयत्यपि तं भक्तिर्योगैकशरणा यदि ॥ २२

अयोग्ये यदि युज्येत मोहेनातपसा क्वचित् ।
योगिनो न गतिर्भूयात् कैवल्यस्वर्गसिद्धये ॥ २३

भूतिमन्तोऽत्र योग्याः स्युः स्वर्गादिभोगलब्धये ।
अपवर्गाय योग्यत्वं पुरुषे चेश्वरे गुरौ ॥ २४

सरूपात् कारणात् कार्यं सरूपं नियमादिति ।
'ये यथा मां' स्मृतेर्भक्तिर्यथायोग्यं विधीयते ॥ २५

त्वं पदार्थश्चेश्वरोऽत्र गुरवो भूतिसंयुताः ।
चित्तस्थितिक्रमेणैषु संवेगेन स्थितिर्भवेत् ॥ २६

इदं श्रेयस्करं कर्म ब्रह्मैकशरणं ध्रुवम् ।
अनुरागात्मिका संस्था धीयते चात्रयोगिभिः ॥ २७

साध्येयं स्वहृदि ध्येयगुणादिस्मृतिपूर्विका ।
बाह्यावलम्बनाच्चास्याः परार्थत्वात् स्मृताऽपरा ॥२८

आदौ भक्तिः प्रतीकेन चात्मभावात् ततः परम् ।
सान्द्राऽनन्दप्रवाहोऽपि क्रमशश्चाभिवर्धते ॥ २९

संस्थितो मयि सर्वात्माऽहं च सर्वात्मनि स्थितः ।
इत्येवं भावना कार्या सत्त्वशुद्धिमभीप्सता ॥ ३०

विगतेषु च दोषेषु द्रष्टृसंस्थैकलक्षिणः ।
निर्बीजध्यानसिद्धस्य परवैराग्यकामिनः ॥ ३१

सर्ववृत्तिनिरोधेन संस्कारशेषचेतसः ।
एकान्तात्यन्ततः संस्था द्रष्टरि स्यात् स्वभावतः ॥ ३२

गीयते सा परा भक्तिर्निरोधभूमिसाधकैः ।
आत्मप्रत्ययगर्भान्यबोधहीना प्रशान्तिभूः ॥ ३३

ज्ञानिनां सांख्यतत्त्वेषु निदिध्यासनकारिणाम् ।
द्रष्टृस्वरूपसंस्थेयमुपायप्रत्ययैर्भवेत् ॥ ३४

एष वै परमो लाभः प्रत्यगात्मस्थितिर्यतः ।
आत्मा प्रेष्ठः पदार्थेभ्यः 'पुरुषान्न परं' श्रुतेः ॥ ३५

केचिदाहुरियं भक्तिरीश्वरैकावलम्बना ।
न तद् युक्तं यतो भक्तिर्धीयतेऽनीश्वरेष्वपि ॥ ३६

न वा रागात्मिकायुक्ता प्रत्यगात्मनि या स्थितिः ।
अनुशेते सुखं रागः सुखलेशो न चात्मनि ॥ ३७

रागः क्लेशविशेषस्तत्सत्तायां क्वात्मसंस्थितिः ।
पूर्णवृत्तिलयेनैव सिद्धा स्यादात्म-संस्थितिः ॥ ३८

आत्माऽसुखोऽतीन्द्रियोऽपरिणामीति श्रुतेर्मतम् ।
आत्मरत्यादिवाक्यानां स्थित्यर्थेनैव सङ्गतिः ॥ ३९

मन्यन्ते वादिनां केचित् स्याद् भक्तिर्ज्ञानलक्षणा ।
ज्ञानातीतेति केचिच्च विवदन्तः परस्परम् ॥ ४०

न युक्त आदिमः पक्षः इष्टत्वबोधबाधनात् ।
ज्ञानातीता तथा भक्तिर्न ग्राह्या केनचिद् भवेत ॥ ४१

ज्ञेया सा द्विविधा भक्तिर्बोधप्रवाहरूपिणी ।
भावान्तरेणानुविद्धा न ज्ञानं क्षणिकं मतम् ॥ ४२

सात्त्विको यः प्रसादोऽस्ति चित्तस्य तत्सुखं स्मृतम् ।
तेनोपबिद्धसंबोधप्रवाहः सोऽपरा मता ॥ ४३

इयं रागात्मिका संस्था विहिता स्यात् परेश्वरे ।
निश्चलानन्यशरणेशप्रतिष्ठितबुद्धिभिः ॥ ४४

तच्चित्तवहनं भक्तिरस इत्यभिधीयते ।
पीत्वायं स्थितधीर्योगी नित्यं खल्वमृतायते ॥ ४५

शान्तिः समाधिना सर्वकरणानां निरोधनम् ।
तदा द्रष्टुः स्वरूपे स्यात् स्थितिनिरोधकारिणः ॥ ४६

स्वात्मबोधस्तदा शिष्येच्छान्तोऽद्वैतो निरञ्जनः ।
स बोध उपबिद्धः स्यात् प्रशान्त्यैवेति गम्यते ॥ ४७

तत्र बोधस्वरूपं यच्चिदेकरसलक्षणम् ।
कथ्यते तत् परा भक्तिर्देशकालासहा ध्रुवा ॥ ४८

द्वैतव्यक्तभावयुक्ता परिच्छिन्नाऽपरा ननु ।
तस्या भङ्गोऽपि दृष्टोऽतोऽपरा न चरमं पदम् ॥ ४९

अतो योगीश्वरा मोक्षसाधनान्तं दिदृक्षवः ।
मत्वा हेया विभूतीश्च यतन्ते परभक्तये ॥ ५०

आवहन्तो रोधवेग सत्त्वख्यातिं निरुद्ध्य च ।
सत्त्वचैतन्ययोः शुद्ध्या साम्यं कृत्वाऽग्रमेधया ॥ ५१

न स्वल्पेन प्रयत्नेन सहसा सा न सिध्यति ।
ज्ञानवैराग्यपूर्वेण चित्तरोधेन सिद्ध्यति ॥ ५२

अपरया च निष्पत्तिः परभक्तेर्भवेद् ध्रुवम् ।
'ततः प्रत्यक्चेतनस्याधिगमश्चे'ति दर्शनात् ॥ ५३

नाशं कृत्वाऽन्तरायाणामर्थसिद्धिः क्रियावताम्—
स्यादेव, श्रुतियुक्तिभ्यां न सिद्धिः क्वापि दृश्यते ॥ ५४

कर्त्तव्यः शुद्ध आचारः श्रद्धाविद्यादिसंस्कृतः ।
दीर्घकालनैरन्तर्यसत्कारासेवितस्तथा ॥ ५५

परमे पुरुषे शुद्धा भक्तिराचारपालनात् ।
'नान्यः पन्था:' तथा 'चैतैरुपायैर्यतते' श्रुतेः ॥ ५६

मलहीने यदा चित्तेन्द्रिये स्तस्तपसा युजः ।
भवेतां ते प्रसन्ने चापरभक्तिमतस्ततः ॥ ५७

संस्थार्थं यादृशोऽभ्यासः प्रवृत्तिरथ सा स्थितिः ।
तज्जन्या या क्षणव्यापिस्थितिर्दृशि विरागतः ॥ ५८

अनुकूलाचार एष क्लेशकर्मविनाशकृत् ।
कैवल्यं भावयत्यर्थं प्रद्योतयति वास्तवम् ॥ ५९

कर्मसंस्कारभेदेन लोको भिन्नरुचिस्ततः ।
रुचिभेदभुवो भावा वर्तन्ते भजने सदा ॥ ६०

केचिच्च सखिभावेन दास्यभावेन चापरे ।
अन्ये वै मातृभावेन शान्तभावेन चापरे ॥ ६१

एवं बहुविधैर्भावैर्विततैर्ब्रह्मणो मुखे ।
भावयन्ति भव भावहीनानां भजनं न हि ॥ ६२

चरमस्थितये सर्वभावानामुपकारिता ।
यथोक्तं सर्वभावेन शरणं गच्छ भारत ॥ ६३

दास्यादिभावयुक्तानां दुःखनाशो न शाश्वतः ।
यत एते परिच्छिन्ना भावा दोषयुतास्तथा ॥ ६४

क्षयातिशयशून्यत्वादिष्टत्वात् प्राणिनामपि ।
अद्वैता शान्तिरेवात्र श्रेष्ठा स्यादिति दर्शनम् ॥ ६५

तस्याः शान्तेः साधकोऽस्ति प्रशान्तभाव एव हि ।
स भावोऽतो वरिष्ठः स्यात् परभावप्रकाशकः ॥ ६६

कैवल्यप्रियभावः स प्रेयः-पूज्यविभागतः ।
द्विविधः पुरुषो यस्माद् द्वौ च प्रत्ययभेदतः ॥ ६७

सर्वस्मात् प्रिय आत्मैवं तद्दर्शनपरस्य हि ।
चित्तौ ज्ञानमयी संस्था प्रेयोभावकृता भवेत् ॥ ६८

अपरिच्छिन्न एवासौ तथालौकिक एव च ।
एतद्भावानुविद्धोपासनं जेगीयते श्रुतौ ॥ ६९

परमैश्वर्ययुक्तेशे पूज्यभावः प्रयुज्यते ।
प्राप्यतेऽपि ततो मुक्तिर्योगोक्तक्रियया ननु ॥ ७०

आचारो द्विविधो बाह्यमुखा अन्तर्मुखा यतः ।
साधकः कथ्यते बाह्याचाराणां साधनं यथा ॥ ७१

क्लिष्टसंस्कारयुक्तानां वृत्तिसंक्षुब्धचेतसाम् ।
बाह्यज्ञानप्रियाणां च स्मृतावव्यवसायिनाम् ॥ ७२

श्रद्धादिलवसक्तानां खलु मन्दाधिकारिणाम् ।
बाह्येज्यैवानुकूलोऽन्तरङ्गसाधनसिद्धये ॥ ७३

बाह्येज्यायास्त्रयो भेदाः परिचर्या बलिः स्तुतिः ।
परिचर्या गुरौ सेवा श्रद्धाज्ञानादिपूर्विका ॥ ७४

इष्टस्य तत्प्रतीकस्य वोपहारेण पूजनम् ।
बलिः शब्दादिभिश्चात्मनिवेदनमिह स्तुतिः ॥ ७५

महापुरुषसङ्गत्या तत्कथाश्रवणेन च ।
दीर्घकालं श्रद्धया च बाह्येज्याकरणेन वै ॥ ७६

उत्पद्यते दृढो रागो बाह्यकर्मविनाशकः ।
यतो रागप्रसूर्ह्यस्ति नित्यसङ्गतिरेव नु ॥ ७७

संसिद्धायां दृढरतो इष्टादन्येषु वस्तुषु ।
न रतिर्दृश्यते यस्य तस्यान्तर्यजनं भवेत् ॥ ७८

यदन्तर्यजनं स्वेष्टरतिकामैकलक्षणम् ।
प्रोक्तं तल्लक्षणान्यत्र विविच्यन्ते समाधये ॥ ७९

सदेष्टस्य स्मृतिश्चान्यविषयास्मरणं तथा ।
इत्येवं स्मृत्युपस्थानं प्रीतेः प्रथमलक्षणम् ॥ ८०

ध्रुवा स्मृतिरिति श्रौतात् स्मृतेः स्मरति नित्यशः ।
स्मृत्यनुशासनाद् योगशास्त्रे सिद्धा त्वियं स्मृतिः ॥ ८१

तत्सहभाविनः सन्त्यानन्दाश्रुपवनं सुखात् ।
संभ्रमाद् रोमहर्षश्च कायजाड्यं च सात्त्विकम् ॥ ८२

ग्लानिजो योऽश्रुपातश्च साधुः सोऽपि भवन्ति ह ।
एता वै दैहिकावस्था ज्ञापिका भजनस्थितेः ॥ ८३

काष्ठां प्राप्ता यदा चान्तरेज्या कुशलदेहिनः ।
स्वेष्टमात्रख्यातिरेव स्वे महिमनि राजते ॥ ८४

आत्मधारणसंसक्ता स्यात् स्वबुद्धिर्गरीयसी ।
वेदेऽग्र्या बुद्धिरत्रोक्तं विवेकख्यातिलक्षणा ॥ ८५

तदैकान्तिकसंस्था स्यात् पुरुषे साधकस्य नु ।
स्वबुद्धौ निश्चलायां खल्विन्द्रियाणि तथैव च ॥ ८६

चित्ते व्यक्ते न संस्था स्याच्चित्तौ दृश्यानुरागतः ।
तथैव दैहिके स्थैर्येऽतो रुद्धौ स्वस्थितावुभौ ॥ ८७

अयं वै परमो धर्मः सर्वदुःखप्रणाशकः ।
स भूमाऽत्र 'यदा पञ्चावतिष्ठन्त' इति श्रुतिः ॥ ८८

अन्तरेज्या साधनेन यदा काष्ठां गताऽपरा ।
भजनीयस्वरूपं सा प्रकाशयति तत्त्वतः ॥ ८९

सोऽहमिति प्रशान्तेन भावेन भजतो भवेत् ।
विषयस्य तत्त्वबोधो रोमहर्षादिपूर्वकः ॥ ९०

श्रद्धया शान्तदास्यादिभावैर्लोकपतीन् तथा ।
भजतः सार्ष्टि-सामीप्य-सारूप्यादिफलं भवेत् ॥
'भक्त्या मामिति' गीतोक्तेः 'संकल्पसिद्धि' शासनात् ॥९१
इत्येवं योगिनः प्रान्तभूमिप्रज्ञाश्रितस्य च ।
तत्त्वज्ञानेन शान्तस्य ह्यात्मनोऽधिगमः स्वतः ॥ ९२
व्यक्ताव्यक्तज्ञविज्ञानं तत्त्वज्ञानं वदन्ति ह ।
एतदन्तर्गता ह्यर्थाः सर्ववादिप्रभाषितः ॥ ९३
आभूतादाबुद्धितत्त्वमनित्यं व्यक्तमुच्यते ।
अव्यक्तं गुणसाम्यं यज् ज्ञः स्वचैतन्यमेव तु ॥ ९४
समाधावपि निष्पन्ने ज्ञानहीनस्य योगिनः ।
परागतिर्न सिद्धान्तो ज्ञानाभ्यासविधिः कृतः ॥ ९५
वृत्तीनां साक्षिताभाव एवात्माधिगमो महान् ।
तत्त्वज्ञानाभ्यासपूर्वः स सिद्ध्यतीति दर्शनम् ॥ ९६
सार्वज्ञादिषु वैराग्ययुक्तो यः परभक्तिमान् ।
हेयमव्यक्तमित्येव कुशलो योऽभिमन्यते ॥ ९७
न मे नाहं तथा नास्मीति चिन्तनपरायणः ।
अतिक्रान्तभावनीयः यः स शुद्धो विमुच्यते ॥ ९८
परं पदं यदाऽभ्यासादसकृद् याति लीलया ।
निस्तैलदीपवत् संपद्यते तज्जीवनं खलु ॥ ९९
चक्रभ्रमणवद् योगिशरीरं विद्यते क्षितौ ।
कर्माभावाद् देहपाताद् मुक्तिः शाश्वतिकी ततः ॥ १००
नाशादिधर्मशून्येयं शाश्वती शान्तिरेकला ।
देशकालानवच्छिन्ना चैकान्तात्यन्ततः शिवा ॥ १०१
अयं दुःखवियोगो हि योगलक्षणमीरितम् ।
यल्लाभादधिको लाभो नास्तीति मन्यते कविः ॥ १०२

स्वरूपस्थो यदा द्रष्टा दृशिमात्रश्च केवलः।
गुणवर्गे चरितार्थेऽतः सिद्धा कृतकृत्यता ॥ १०३

न पुनस्तस्य बन्धः स्यात् स्वप्रकाशस्य च प्रभोः।
मेघमुक्तो यथा सूर्य इत्येव स्वस्थता चितेः ॥ १०४

इत्थं वै भक्तियोगस्य सारोऽयं दर्शितो मया।
तत्साधननिविष्टानामस्त्वयं प्रीतये सनात् ॥ १०५

इति श्रीमत्स्वामिहरिहरानन्दाख्यानुशासन-सारयुतः साख्ययोगीयो भक्ति-कौस्तुभः।

## केषाञ्चन गिरः

परश्लोकान्स्तोकामनुदिवसमभ्यस्य ननु ये
चतुष्पादीं कुर्युर्बहव इह ते सन्ति कवयः।
अविच्छिन्नोद्गच्छज्जलधिलहरीरीतिसुहृदः
सुहृद्या वैशद्यं दधति किल केषाञ्चन गिरः ॥

—*मङ्खकस्य*

# मर्मस्पर्शिव्यङ्ग्यकारो महाकविरकबरः

विद्याभूषणः
श्री गणेशराम शर्मा

संस्कृतपण्डितानामस्माकं बत उर्दूभाषायाः काव्यरचनाभिस्तत्कविभिश्च कः परिचयः, किं वा प्रयोजनं स्यात् ? अस्मत्पूर्वजास्तु संस्कृतवाङ्मयादतिरिक्तं भाषान्तराणां साहित्याध्ययनेऽतीव निःस्पृहा निरपेक्षा मन्दादरा इवासन् । कामं ते खल्वान्तरभाषासाहित्यं परिचिन्वानाः स्युः परन्तु यावदारब्य-पारसीक-उर्दू भाषादीनां सम्बन्धोऽस्ति, ते किलार्यभाषातिरिक्तानां भाषाणामध्ययनमनावश्यकमिव मेनिरे परन्तु क्वचित्तत्तद्भाषापरिचयमपि निषिद्धं घोषयामासुः । तथा हि — "न पठेद् यावनीं भाषां प्राणैः कण्ठगतैरपि ।" इत्यादि चावोचन् । फलतः संस्कृतज्ञा जना भारतीयाः पण्डितप्रवरा आन्तरभारतीवाङ्मयानुशीलनेऽनवदधाना एव तस्थुः ।

यावज्ज्ञानार्जनस्य सम्बन्धोऽस्ति, तावत् स एष दृष्टिकोणो न स्वस्थो नः प्रतिभाति । विशेषतोऽधुनातने ज्ञानविज्ञानोत्कर्षप्रधाने नवीने युगे नायं सिद्धान्तः स्वयं संस्कृतज्ञानां हिताय योगक्षेमावहः प्रसिद्ध्यति । स्वयं पङ्क्तीनामासां लेखकस्य ममापि च भाषान्तरवाङ्मयानां साहित्याध्ययने सैषा धारणा हृदि बद्धमूला बभूव, परन्तु संस्कृतमधीयानोऽप्यहं भाषान्तराणां साहित्यसेविभिस्तत्काव्यरचनाभिश्च हिन्दीपत्रपत्रिकापुस्तकादि माध्यमेन परिचयं, सम्पर्कं, घनिष्ठतां चासादयं, तदा मद्धृदि वाङ्मयाद्वैतं साक्षाद् बभूव । ततस्तु हिन्दी-उर्दू-गुर्जर-बङ्गीयांग्लभाषादीनां वाङ्मयेऽपि चाहं संस्कृतसाहित्यवत् परमां प्रीतिं, रसानु-

भवमानन्दं चानुभवितुमारेभे । सत्यमेवोक्तं भगवता योगेश्वरेण श्रीकृष्णेन गीतासु —

"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥"

निवेदनस्यायमाशयोऽस्ति यत् संस्कृतविद्वांसः पाठकमहाभागाश्च लेखस्यास्य प्रयासमिमं न व्यर्थमपलापं मन्येरन्न चास्थानेऽनवसरजल्पितमिव भावयेयुरिति ।

सर्वप्रथममहं महाकवेरस्य अकबरस्य परिचयं तदा लेभे यदा 'महाराज-संस्कृत कालेज, जयपुर' इति ख्याते महाविद्यालयेऽध्ययनपरोऽभवम् । तदानीं हिन्दी भाषायाः साहित्यविकाशक्रमे 'द्विवेदिकालो' वर्तमानोऽभूत् । तत्समये सरस्वती-माधुरी-सुधा-त्यागभूमि-प्रभा-चाँद-प्रभृतिषु मासिकपत्रिकासु सुकवेरस्याकबर-महाशयस्य काव्यकृतित्वविषयकान् कांश्चिल्लेखान् समीक्षापरकानहमपठम् । पण्डित पद्मसिंहशर्ममहाभागस्य, डॉक्टर अमरनाथझामहोदयस्य, पण्डित श्री पद्म-कान्तमालवीयमहाभागस्य, इकबालवर्मासिंहरमहोदयस्य च कवेरकबरस्यालोच-नात्मकांल्लेखानहं मनोयोगेनापठम् । उपन्याससम्राजः प्रेमचन्द्रस्यापि विषयेऽस्मिन्नेकं समीक्षात्मकं लेखमहमपठम् । ततस्तु क्रमेणोत्तरोत्तरं तमिमं महाकवि-मकबरं प्रति मम ध्यानं सुतरामाकृष्टं बभूव । यत्र कुत्रापि पत्रपत्रिकास्वस्य कवेः काव्योद्धरणान्यहमासादयं ततस्ततः संगृह्य-संगृह्य स्वकाव्यसूक्तिसंग्रहपञ्जि-कास्वलिखम् । स एष लेखस्तस्यैवाध्ययनस्य फलरूपोऽद्य पाठकानां पुरत उप-स्थाप्यते मया ।

## अकबरस्य महाकवेर्जीवनपरिचयः

अस्य महाकवेः सम्पूर्णमभिधानं खानबहादुर सैयद अकबर हुसैन इत्यासीत् । अस्य कवेर्जन्मोत्तरप्रदेशे प्रयागमण्डलान्तर्गते बारा इति सम्भागे १८४६ तमे ईस्वीवर्षे बभूव । अस्य निवासस्थानं प्रयागनगरं बभूव । स्वकाव्यरचनासु स 'अकबर इलाहाबादी' इत्युपनाम प्रयुयुजे । तस्मादेव हि स अकबर इलाहाबादीति कविसमाजे परिचितो विख्यातश्च बभूव । स एष महाकविः पारसीक-अरबी-आंग्ल-

भाषाः सम्यग् जानानः सुपरिचिन्वानस्तासु व्युत्पन्नमतिश्चासीत्। उर्दू भाषायां तु तस्य महाकवेर्महानेवासाधारणोऽधिकारो बभूव। तेन सर्वमपिस्वकाव्यमुर्दू-भाषायामेवोपनिबद्धम्। स किल तदानीन्तनांग्लशासने राजकीय-सेवासम्पादनात् साधीयसीमभ्युन्नतिमाससाद। अन्ततः स न्यायाधीशपदमप्यधितस्थौ। स हि १८६६ तमाद् ईस्वीवर्षाद् कवयितुमारेभे तथा १९२१ तम-ईस्वीवर्षपर्यन्तं निरन्तरं कवयंस्तस्थौ। अथ च सः सन् १९२१ तमे ईस्वी वर्षे षट्सप्तति-वर्षात्मके स्वायुषि परलोकं जगाम।

## काव्यकृतित्वम्

यथा उर्दूभाषायाः काव्यसाहित्ये 'ग़ालिब' महाकवेः काव्यरचनासु दार्शनिकत्वं, विचारगाम्भीर्यं, मीरकवेः सरलवादित्वं, 'दबीर'-'अनीस'-कव्योर्द्वयो-र्भावप्रवणत्व, 'दाग़'-महाकवे रसज्ञता, 'हाली' महाकवेरुपदेशप्रियत्वं चातितरां सुप्रसिद्धमद्वितीयमनुपमं च मन्यते, तथैवास्य महाकवेरकबरस्य रचनासु व्यङ्ग्यविनोदप्राचुर्यं, कटाक्षाक्षेपपरत्वं, मर्मस्पर्शित्वं सिद्धसमालोचकत्वं च भूयस्तरां सुविख्यातमास्ते। यद्यपि महाकविनाऽनेनाकबरेण धर्मं, तत्त्वज्ञानं, प्रणयमुपदेशान्, समाजनीतिं, राजनीतिं, शिक्षां समसामयिकान् प्रसङ्गान्, घटनान्तराणि तथा-विधांस्तांस्तान् विषयानधिकृत्य प्रचुरपरिमाणं साहित्यं निर्मितमास्ते परन्तु महा-कवेरस्य हास्य-व्यङ्ग्य-विनोदगर्भाः सूक्तयो जनमानसेऽतीवप्रियतया शाश्वतिकं स्थानं लेभिरे। अनेनैवोद्दामगुणेन कविरयमतीवदुर्लभां कीर्तिं, प्रसिद्धिं, यशश्च लेभे।

अथास्य महाकवेरकबरस्य काव्ये सर्वतो महान् गुणस्तावद् विनोदप्रचुरया शैल्या, परिहासभङ्गीभिः सटीकं व्यङ्ग्योद्भावना तथा वर्तमानभारतीयसमाजस्य लोकाना तत्तत्प्रवृत्तीनां वर्णनमास्ते। यतोऽकबरोऽसौ राजकीयांग्लशासने स्वयं न्यायाधीशपदमलंचक्रे, गौराङ्गानां कूटनीतिदुर्विलसितं, तदुरभिसन्धीन्, भारतीयप्रजानां पराधीनतां, दासत्वभावनामशिक्षां सर्वमिदमित्थं भुक्तभोगत्वेन सम्यग् विवेद। स एष महाकविः पौरस्त्यसभ्यतायां, भारतीयायां संस्कृतौ, देशस्यैतस्य प्राचीनपरम्परासु च निष्ठापूर्वकं बहु श्रद्दधानो बभूव। सत्यप्येवं स क्रान्तदर्शित्वात्, संवेदनशीलत्वात्, सहृदयत्वाच्च नव्ययुगीनं सर्वं चापि विश्वप्रपञ्चं हस्तामलकवद्

बुबुधे। तत एवासौ मर्मस्पर्शिणीः, सर्व-जनहृदयग्राह्या रचनाः कर्तुं प्रबभूव। तद्रचनासु यन्मार्मिकत्वं, या हि चिन्मयता, सजीवता, यद् व्यङ्ग्यं, या नीति-प्रवणता, या परिहासपेशलता, यः कटाक्षो, यदर्थगाम्भीर्यं, यद्भाषासारल्यं, यदनुभवशबलत्वं, यद्वा प्रत्युत्पन्नमतित्वं पदे पदे दरीदृश्यते, तदन्यत्र दुर्लभम्।

तदत्र प्रकरणे महाकवेरस्याकबरस्य कानिचित् काव्यरचनोदाहरणान्यवतार्य तत्कृतित्वं किमपि वर्णयितुमुत्सहामहे। आशास्यते, संस्कृतज्ञानामपि सहृदयाना-मस्माकं प्रयासेनानेन कापि मनस्तुष्टिर्विनोदश्च भवेन्नाम नूनम्। सर्वादौ वयमत्र कवेरास्तिकत्वविषये काश्चन सूक्तीरुद्धराम :—

"खुदा के बाब में यह गौर क्या है?
खुदा क्या है? खुदा है! और क्या है?"

अत्र पङ्क्तिद्वयपरिमिते पद्यांशेऽपि कविरसौ परमेश्वरस्यास्तित्वविषये कथयति—'अयि भोः! सांसारिका मोहमुग्धा मायापरवशा जनाः! ईश्वरस्या-स्तित्वविषये यूयं किं गाम्भीर्येण चिन्तनपरा विचारविमर्शं, तर्कयुक्तिवादविवादान् कुर्वाणाः स्थ? ईश्वरो ननु किमास्ते? स खलु सर्वैरपि सुविज्ञातः, सर्वसाधार-णैरपि समनुभूयमानः सर्वगुहाशयः सर्वत्र व्यापकः स्वयंसिद्धोऽस्ति परमेश्वरः। तदस्मिंस्त्रिकालाबाधिते स्वयंसिद्धे परमात्मतत्त्वविषये बत किं नामाधिकं विचार-णीयमास्ते? यूयमत्र वृथैव बुद्धिवादानाश्रित्यात्मानमन्यांश्च ताम्यथ! यूयं सत्यमेव हि लक्ष्यभ्रष्टा दिग्भ्रान्ता विवेकरहिता मूर्खाः स्थ, यदेवंविधे नन्वापामर-मनीषिजनं सर्वजनसुविदिते सुस्पष्टे सुविनिर्णीतेऽपि चेश्वरसत्ताविषये बत चिन्त-नपराः क्लिश्यथ! किं नु बतात्र विशेषेण चिन्तनयोग्यं विद्यते नाम? ईश्वररस्तु किलेश्वर एवास्ते, नान्यत् किमपि'

परोक्षसत्तात्मिकायां परमात्मशक्तौ कीदृशो द्रढीयानविचलोऽस्ति गभीरो विश्वास आस्था निष्ठा च कवेरिति मार्मिका एवात्र प्रमाणम्।

अन्यच्च—

"अगर मिला नहीं, मिलने का आसरा तो है;
हमें इसी में तस्कीने-दिल, खुदा तो है।

अजल को देख कर जेरे-फ़लक़ क़रार आया;
मुसीबतों का बिलाखिर इक इन्तहा तो है ॥"

अत्र कविर्वदति— 'यद्यपि परमेश्वरस्य साक्षात्कारो न बभूव तथापि तन्मिलनस्याशा, साधनं तु वर्तन एव। वयं तु तावदेतावतैव स्वहृदये शान्ति, सन्तोषं चानुभवामो यदीश्वरस्यास्तित्वं तु विद्यते। संसारस्यास्य नाशवत्तां, स्वदेहस्य क्षणभङ्गुरतां, मृत्योरनिवार्यतां वीक्ष्यान्ततोऽहं विश्वसिमि यद्विपदां कथमपि चान्तस्त्ववश्यमेव भावीति सुनिश्चितमेवास्ति।'

जगद्विषयेऽस्य कवेर्दृष्टिकोणः

"अजल से वे डरें जीने को जो अच्छा समझते हैं।
यहाँ हम चार दिन की जिन्दगी को क्या समझते हैं॥
यकीं कुफ़्फ़ार को आता नहीं रोजे क़यामत का,
इसीसे वे तुम्हारा वायदे-फ़रदा समझते हैं॥
मै अपने नक़्द दिल से जिन्से-उल्फ़त मोल लेता हूँ;
अतिब्बा को ज़रा देखो, इसे सौदा समझते हैं॥
इसे हम आखिरत कहते हैं जो मशगूले-हक रक्खे;
खुदा से जो करे गाफ़िल उसे दुनिया समझते हैं॥"

अत्र महाकविः संसारं प्रति स्वकीयं दृष्टिकोणं वर्णयन् वक्ति—'मृत्योर्भयं तेषामेव भवति येषां संसारासक्तिर्जिजीविषा च बलवती स्यात्, परन्तु वयं तु जीवनमिदं विनश्वरं क्षणभङ्गुरं च मन्यामहे। वस्तुतो जीवनेऽस्मिन्न बह्वीमास्थां द्रढयामः। नास्तिको जनो बत परलोकमीश्वरीयं न्यायं च न श्रद्दधाति, ततः स शुभकर्मणां फलश्रुतिं केवलं राचनार्थमिव मन्यते। अहं तु बुद्धिमनइन्द्रियादिभिः साधनैः सर्वात्मना यावच्छक्यं धर्माचरणं शुभकर्मार्जनं च विदधे, परन्त्वौपचारिका विधिनिषेधमात्राडम्बरा उपदेशकास्तदिदं मे कर्म सकामं सम्पादितं दम्भमेव भावयन्ति। वयं तु तमेव हि परलोकं मन्यामहे यः सर्वदा सत्कर्मणि नियोज्यास्मान् तदाचरणाय प्रेरयेद्, यश्च परलोकात् सत्कर्मणः परमात्मसत्तायाश्चास्मान् विमुखान्

करोति स एव मायामयोऽसौ जगत्प्रपञ्चोऽस्ति, सैव नश्वरता, तदेव हि च मृषात्व-मस्य जीवनस्यास्ते।

अथाधुना कविमहाशयस्यास्यान्तिमासु रचनास्वेकामवतारयामो यस्यां सः स्वकीयमन्तिममभिलाषं पूर्णया निष्ठयाभिव्यनक्ति—

"नहीं है काम ज़बां का कुछ अब दोआ के सिवा।
नज़र किसी पै नहीं है मेरी ख़ुदा के सिवा॥"

अत्र कविरसौ कथयति 'यदिदानी वार्द्धक्ये मम परमेश्वरस्य प्रार्थनादृते जिह्वाव्यापारस्य किमपि प्रयोजनं नास्ति, न च मम दृष्टिरीश्वरदर्शनं विहायान्यत्र-किमपि पश्यति।'

अथापरस्मिन् पद्ये कविरयं जगतो नश्वरतामधिकृत्य ब्रवीति—

"दुनिया की क्या हक़ीक़त और हमसे क्या तअल्लुक़।
वह क्या है? इक झलक है, हम क्या हैं? इक नज़र हैं॥"

पद्यमिदं कीदृङ्मनोरमं प्रभावोत्पादकं चास्ते! जगतो निस्सारतां तथा तेन सहात्मनः सम्बन्धस्यास्थिरतां प्रदर्शयन् कविरिह संसारं 'झलक' इति तथा स्वात्मानं 'दृष्टिमात्रं' निर्दिश्यात्यन्तं मनोहारिणीमुपमां बबन्ध।

परमात्मनीश्वरेऽनुरक्तिं भक्तिं च विना जीवनसाफल्यं न कदापि सम्भवतीति प्रतिपादयन् वदति—

"हँसके दुनिया में मरा कोई, कोई रोके मरा;
ज़िन्दगी पाई मगर उसने, जो कुछ होके मरा।
जी उठा मरने से वह, जिसकी ख़ुदा पर थी नज़र;
जिसने दुनिया ही को पाया था, वह सब खो के मरा॥"

संसारेऽस्मिन् कर्मानुबन्धानुसारं कश्चिज्जीवः सुखमनुभूय लोकान्तरं व्रजति, कश्चनापरो दुःखं च विषह्येहलीलां संवृणोति। 'कर्मानुगो गच्छति जीव एकः।' इति सत्यमेवास्ते, परन्तु स एव हि जरामृत्युं तीर्त्वाऽमृतत्वमासादयति यस्याभिनोऽन्तर्दृष्टिः परमेशितुः साक्षाद्दर्शनार्थं सततमुद्युक्ता भवति।

अथान्यत्रैकस्मिन् पद्ये महाकविरसावकबरोऽस्य विश्वस्य नवनवं सार्वकालिकं प्रवाहमविच्छिन्नं जायमानं तथा मानवजीवनस्य 'पुनरपि जननं पुनरपि मरणम्' तस्य च क्षणभङ्गुरत्वमधिकृत्य कीदृग् यथार्थवादिनं दृक्कोणमुपस्थापयति, तदपि दृश्यताम्—

"दुनिया यों ही नाशादियों में शाद रहेगी।
बरबाद किए जायगी, आबाद रहेगी।"

अथ ये जनाः समृद्धिं धनवैभवादिसुखमुपलभ्यापि च धर्मं नाचरन्ति, भोगेच्छां च न जहति प्रत्युत सदैव वासनाग्रस्ताः सन्तः सत्कर्मरहितं हि जीवनमपक्षपयन्ति, तान् प्रति कविराह—

"न नमाज है, न रोजा, न जकात है, न हज है।
तो खुशी फिर इसकी क्या है ? कोई जण्ट, कोई जज है।।"

ये प्राप्यापि दुर्लभं मानवं जन्म धर्मं नानुतिष्ठन्ति, व्रतोपवासदानतीर्थादिकं न विदधति, ते कामं कियदप्युच्चपदमधितिष्ठन्तो महान्तोऽधिकारिणः किं न भवेयुस्तेन पदेन धनवैभवादिना च ते कां मुदं प्रसन्नतां वानुभवितुमर्हन्ति ? वस्तुतो धर्माचरणं विना लोकद्वयेऽपि सुखं शान्तिं जीवनसाफल्यं वाप्तुं नार्हन्तीति कवेरस्याभिप्रायोऽस्ति ।

प्रायेण मनुष्यः संतोषाभावे तृष्णाकुलोऽस्मिन् संसारेऽन्नपानादिकं सर्वं सुखमुपभुञ्जानोऽपि च यावन्मिलितैः सुखसाधनैः शान्तिं सुखं च न विन्दते, तद्धि मनुष्यस्यैवात्मनो दौर्बल्यमविवेकश्च विद्यते । तथ्यमिदमुपवर्णयन् कविः कथयति—

"दो मुरादें जो मिलीं, चार तमन्नाएँ कीं।
हमने खुद क़ल्ब में, आराम को रहने न दिया।।"

उदाहरणैरेभिः सरलतयैतज्ज्ञातुं सुशकं भवति यत् कवेरकबरस्येश्वरे धर्मकर्मसु, परोपकारे, संतोषादिषु चाध्यात्मिकेषु तेषु तेषु गुणेषु कीदृशी श्रद्धास्था, निष्ठा, विश्वासश्चासीदिति ।

अथेदानीं महाकवेरस्य कृतित्वं पाठकेभ्यः परिचाययितुं कानिचित् प्रसङ्गान्तराण्यवतारयामः —

महाकविरयमकबरो हास्य-विनोद-व्यङ्ग्य-कटाक्ष-पूर्णानां काव्यरचनानां निर्माणे सिद्धहस्तो मार्मिकश्चाभूत्। स हि सरलातिसरलेषु परमितपदेषु च काव्यगुम्फेषु गम्भीरातिगम्भीरान् मर्मस्पृशो भावांस्तथा प्रकटयति यान् पठतामस्माकं हृदये हास्यमेकपदे प्रोन्मुक्तभावं प्रस्फुटति। स आह—

"बुतों से मेल, खुदा पै नज़र, ये खूब कही!
शब गुनाह वो नमाज़े-सहर, ये खूब कही!!
फिटन नफ़ीस, सडक खुशनुमा, डिनर हर शब;
ये लुत्फ़ छोड़कर हज का सफ़र ये खूब कही!!
तुम्हारी खातिरे-नाज़ुक है खयाल फ़कत;
वरना मुझको रक़ीबों का डर, ये खूब कही!!

अत्र काव्ये 'ये खूब कही!' इत्यस्य वाक्यांगस्यासकृदावृत्त्या भूयो भूयो विभिन्नान् भावान् पृथग्भङ्गीभिर्वर्णयता कविना हास्यं, मार्मिकं व्यङ्ग्यं, लोकानां मनोवृत्तयश्च कीदृक् सटीकं वर्णिता इति द्रष्टव्यं सहृदयैः पाठकैः।

## नवसभ्यतां प्रति कवेर्दृष्टिकोणः

अस्य कवेर्हास्यरसप्रधानेन प्रकारेण नवसभ्यतायाः विशेषतः प्राचां सभ्यतां परित्यज्य पश्चिमीयायाः सभ्यतायास्तत्संस्कृतेर्वरणपराणां भारतीयानां बलान्धानुकरणं प्रति क्षोभाविष्करणं सर्वत्रैव दृष्टिपथमागच्छति। वर्तमानसमये भारतीया जनाः पाश्चात्त्यसभ्यतामनुकुर्वाणाः पाश्चात्त्यशिक्षामधीयानाः पश्चिमीयाचारविचारांश्च स्वीकुर्वन्तः सन्ति, तदस्मै कवये सर्वथा न रुरुचे। तस्मादनेन कविनाकबरेणांग्लाचाराणां नवसभ्यतायास्तथांग्लशिक्षायाश्च स्थाने-स्थाने महानेवोपहासो विहितः स्वकाव्यरचनासु। कानिचिन्निदर्शनान्यवलोक्यन्ताम्—

श्रूयते, यत् कविवरस्यास्याकबरस्य साक्षाद्दर्शनार्थं भारतकोकिला सरोजिनीनायडूमहोदया स्वभर्त्रा तथान्यैश्च कैश्चिद्भद्रजनैः साकं तद्गृहं प्रापुः। सरो-

जिन्या देव्या भर्तुरभिधानं भोलानाथ इत्यासीत् । यदा ते सर्वे कविमकबरं दृष्ट्वा वार्तालापादिकं कृत्वा ततः प्रतिनिवर्तितुं तत्परा बभूवुस्तदा महाकविना पत्रे खल्वेकस्मिन्नेकं पद्यं विलिख्यावरणान्तरे पिधाय समर्पितम् । प्रोक्तं च 'गृहं गत्वा तदिदं पत्रमपगतावरणं कृत्वा पठ्यताम् ।' इति । अथ गृहं प्राप्य तत् पत्रमुद्घाट्य पठितम् । तत्पत्रे पद्यमिदं लिखितमासीत्—

"वाह ! क्या धज है मेरे भोले की !
शक्ल कोले की, हैट शोले की !!"

भोलानाथमहाशयो मद्रासप्रान्तीयोऽभूत् । तत्प्रदेशीया जना वर्णतः श्यामाङ्गा भवन्ति । कृष्णवर्णोऽपि भोलानाथो मस्तके शोलानाम्न्या व्यापारिक-मण्डल्या निर्मितं श्वेतवर्णं पाश्चात्यमुष्णीषं परिधत्ते स्म । भारतीयः कृष्णवर्णोऽपि स तादृशं वैदेशिकं वस्त्रभूषादिकं परिदधे यत् कविवरोऽकबरो नोचितं मेने । तत एव तेनायमुपहासो विहितस्तस्य । स्वगृहमतिथित्वेन समागतस्य तस्योपहा-सकरणं नोचितं मेने कविरसौ, ततः स पद्यं पिधाय तेभ्यः प्रदत्तवान् । विधिनानेन सः स्वकाव्यप्रतिभायाः परिचयमपि प्रादात् । अत्र 'कोले' 'शोले' इत्यनयोः शब्दयोः क्रमेणाङ्गारविस्फुलिङ्गयोः संगतिः सर्वथौचित्यं धत्त इत्यत्रधारणीयम् ।

अथैकदा कश्चित् स्नातको महाकवेरस्याकबरस्य गृहं जगाम । तदानीम् अकबरो गृहान्तः स्थितोऽभूत् । स्नातकमहाशयेन स्वागमनं कवये विज्ञापयितुं स्वस्य परिचयपत्रं (विजिटिंग कार्ड) प्रेषितम् । तत्र पत्रे नामधामादिकं तु मुद्रितमभूत् परन्तु स्नातकत्वोपाधिलेखनाय स्थानं तत्र न वर्तते । स महाशयः स्वकीय-मुपाधिं विज्ञापयितुं तत्रैव परिचयपत्रे सद्य एव स्वलेखन्या बी. ए. इति विलिख्य पत्रं भृत्यद्वारा कविं प्रति प्राहिणोत् । गृहान्तः प्रविश्य सेवकस्तत्पत्रम् कवये प्रार्पयत् । तत् पठित्वा कविस्तदिदं पद्यं तस्यैव परिचयपत्रस्य पृष्ठे तत्कालं लिखित्वा स्नातकं प्रति प्रेषितवान् । तच्च पद्यमिदमासीत्—

"शेख़ जी घर से न निकले, और यूँ कहला दिया;
आप बी० ए० पास हैं तो मैं भी बीबी-पास हूँ ॥"

अत्र कवेः परिहासप्रियत्वं, प्रत्युत्पन्नमतित्वं, प्रतिभाप्रस्फुरणस्य चमत्कारः क्रियान् मर्मस्पृगिति प्रत्यक्षमेवास्माकं वर्तते ।

महाकविरसावकबरः पश्चिमीयां सभ्यतां तु सर्वदैव विनिन्दति । स्वसभ्यतां, संस्कृतिं च परित्यज्य पश्चिमीयांग्लसंस्काराणां स्वीकरणेन कः परिणामो भवतीति व्याचक्षाणो वदति सः —

"अजी जाने-वतन को पहिले ही से देता हूँ नोटिस,
चुरट और चाय की आमद है हुक्का-पान जाता है ॥
ये इतनी गोशमाली तिफ़्ले-मकतब की नहीं अच्छी;
जबाँ आती है उसको, सच है, लेकिन कान जाता है ॥
मेरी दाढ़ी से रहता है वो बुत इन्कार पर कायम ;
मगर जब दिल दिखाता हूँ तो फौरन मान जाता है ॥
नई तहजीब में दिक्कत जियादह तो नहीं होती;
मजाहब रहते हैं कायम, फकत ईमान जाता है ॥"

अत्र कविः कथयति—'यदहं देशस्य सम्भ्रान्तान् सज्जनान् प्रागेव नवसभ्यताया भयं विज्ञापयामि, यद्धि देशेऽत्रास्माकं पाश्चात्त्यसभ्यतायाः प्रसारात् प्राचीनास्माकं सभ्यता संस्कृतिश्च ह्रासं गच्छतः । पाश्चात्त्य संस्काराणामत्र देशेऽधिकाधिकप्रचारेण धूम्रपानस्य, चायचषकपानस्य च विदेशेभ्य आयातो भवति, प्राचीनवस्तूना हुक्कताम्बूलप्रभृतीनां भोग्यपदार्थानां प्रचलनं विलोपं व्रजति । नवीनसभ्यताया अस्या देशेऽत्र प्रचारान्नाधिकं तदङ्गीकरणे किमपि काठिन्यं भवति । अस्यां सभ्यतायां सम्प्रदायास्तु यथापूर्वमक्षतास्तिष्ठन्ति परन्तु स्वधर्मे श्रद्धानिष्ठैव केवलं विलुप्यति ।'

अधुनास्माकं देशे यन्नास्तिकत्व, भोगवादः, स्वेच्छाचारश्च वर्धमानोऽस्ति खल्वांग्लशासनतन्त्रस्यैव परिणामस्वरूपोऽस्ति । तमिममभिप्रायं कविः स्वपद्येऽधस्तात्लिखिते नन्वित्थं प्रकटयति —

"इस अहद मायल सुरा-इलहाद जो दिल है।
इसकी तो गवर्नमेण्ट ही रिस्पॉनसीबिल है॥"

अर्थादिदानीं समये मानवहृदयं यद्धि नास्तिक्यं प्रति प्रवृत्तमास्ते, तस्योत्तरदायित्वं शासनतन्त्रस्यैव शिरसि वर्तते ।

अथाद्यत्वे शिक्षाया या दुरवस्था विजृम्भमाणास्ते, शिक्षितेष्वपि भारतीयेषु विशेषतो नवयुवकेषु या दुराचारिता, मर्यादाराहित्यं, शिष्टाचारस्याभावोऽत्र दरीदृश्यते, तत्सर्वं समनुभूय कविवरोऽयमकबरोऽतीव सटीकमेतत्तथ्यं स्वरचनासु वर्णितवान् । दृश्यताम् —

"जो बात मुनासिब है, वह हासिल नहीं करते;
जो अपनी गिरह में है, उसे खो भी रहे हैं।
बे-इल्म भी हम लोग हैं, गफलत भी है तारी;
अफसोस कि अन्धे भी हैं, औ, सो भी रहे हैं॥"

अधुना देशेऽस्मिन्नस्माकं या व्ययबहुला शिक्षास्ते, यया शिक्षया ज्ञानापेक्षयाऽज्ञानमेव विवर्द्धमानं वर्तते, तां शिक्षामुपहसन् कीदृशोऽसौ हितप्रद उपदेशः कविनोपर्युक्ते पद्यद्वये समादिष्टस्तत्सहृदयैर्भुक्तभोगैकसंवेद्योऽस्ति । पुनश्छात्रेभ्यः कविरयमुपदिशति —

"तुम शौक से कॉलिज में पढ़ो, पार्क में फूलो;
जायज है गुबारों पै चढ़ो, चर्ख पै भूलो।
पर यक सखुन बन्दये-आजिज का रहे याद;
अल्लाह को औ' अपनी हकीकत को न भूलो॥"

अत्र कविरुपदिशति छात्रान्, 'यद्यूयं सानन्दमभिनवां राजनीतिकीं, सामाजिकीं, वैज्ञानिकीं वान्तरराष्ट्रीयां शिक्षां पठत परन्तु विनम्रस्य सेवकस्य ममैकं वचन हृदि धारयत यत्परमेश्वरं, स्वकीयां परम्पराञ्च जातु चिन् मा विस्मरत !'

ये वै विद्यार्थिनः केवलं पाठशालान्तर्भुक्तामद्यतनीं पुस्तकीयां शिक्षां ग्रहीतुमेवाहमहमिकया विद्यालयान् प्रति धावन्ति परं शिक्षामंशतोऽपि न गृह्णन्ति, तान् प्रति कविरसौ वदति—

"नये गमलों में फड़ कर फूल जाना,
खुदा औ अखिरत को भूल जाना।
बहुत बेजा है ये वल्लाह 'अकबर',
जरा सुन तो लो, फिर स्कूल जाना ॥"

अद्यत्वे पाठशालासु विद्यालयेषु चाधीयानाश्चापि छात्रा वास्तविकीं योग्यतां ज्ञानं च नासादयन्ति, न च जीवन-सङ्घर्षे क्षमा निष्पद्यन्ते, तदनुभूय कविरसौ वक्ति—

"इसको हम क्या कहें, बदबख्त-ए-नेशन के सिवा।
उसको आना नहीं, कुछ भी इमीटेशन के सिवा ॥"

सेयमधुनातनी शिक्षा सदाचारविघातिनी नास्तिकत्वमेव विवर्धयतीति दृष्ट्वा स्वान्तर्हृदि क्लिश्यन् कविः कथयति—

"निफ्ल में बू हो कहाँ माँ-बाप के अतवार की ?
दूध डब्बों का पिया, तालीम है सरकार की !"

पुनश्चेममेवाभिप्राय प्रकारान्तरेण ब्रूतेऽसावकबरः—

"इल्मी तरक्क़ियों से जबाँ तो चमक गई,
लेकिन अमल फरेबो-दगा ही के साथ हैं !"

पुनरपि स आह—

"बाप-माँ से, शेख से, अल्लाह से क्या उनको काम ?
डाक्टर जनवा गए, तालीम दी सरकार ने ॥"

अस्याः शिक्षाया व्यर्थत्वं प्रतिपादयन् वदति कविः—

"क्या कहें, अहबाब क्या कारे-नुमाया कर गए।
बी० ए० हुए, नौकर हुए, पेंशन मिली और मर गए ॥"

धार्मिकीं, कौटुम्बिकीं च शिक्षां विना छात्रेषु सदाचारस्यानुशासनस्य च प्रतिष्ठा न भवति। तमेतमर्थं द्रढयन् कविरसौ कथयति—

"हम ऐसी कुल किताबें काबिले-जब्ती समझते हैं।
कि जिनको पढ़ के लड़के बाप को खब्ती समझते हैं॥"

पुनश्च —

"शेख साहब चल बसे, कालिज के लोग उभरे हैं अब;
ऊँट रुखसत हो गए, पोलो के घोड़े रह गए॥"

अपरञ्च —

"फैजे कालिज से जवानी रह गई बालाए ताक;
इम्तहाँ पेशे-नजर और आशिकी बालाए ताक!"

अन्यच्च —

"शबों को कोर्स, दिन में फारमूला-वर्क करते हैं;
अदीम-उल-फुरसती में उनकी उल्फत तर्क करते हैं।"

## कन्या-शिक्षा

इदानीं कन्याशिक्षाया विषयेऽपि कवेरस्योद्गारा विलोक्यन्ताम् —

"तालीम लड़कियों की जरूरी तो है, मगर;
खातूने खाना हों, वो सभा की परी न हों।
जी-इल्मो-मुत्तकी-वले हों उनके मुन्तजीम;
उस्ताद अच्छे हों, मगर उस्ताद जी न हों॥"

अत्र कविः स्त्रीशिक्षां समर्थयन्नपि तत्सदाचार-संरक्षणाय सावधानान् करोति भारतवासिन.। पद्येऽस्मिन् बालिकानां निर्लज्जत्वं, तासां स्वेच्छाचारितां, तथा दुराचारिणः शिक्षकान् प्रति कीदृङ्मार्मिकं तीव्रं च कटाक्षं चकार कविस्तन्न परोक्षं सहृदयानाम् भारतीयसमाजस्य यथार्थस्थितिं परिपश्यतां तन्मनोविज्ञानं जानताम्। स च कविरत्र नृत्यगानमात्रं शिक्षमाणानां विलासैकचेतसां स्त्रीणां चित्रं सजीवमारेखयामास।

विकृतायाः स्त्रीशिक्षाया दुष्प्रभावः कियदनर्थकरो भवतीति प्रदर्शयन् कविर-कबरो वदति—

"उनसे बीबी ने फकत इस्कूल ही की बात की।
यह न बतलाया, कहाँ रक्खी है रोटी रात की॥"

अन्यच्च—

"बीबी में जो तर्जे-मगरबी हो तो कहो—
अहसान है ये जो मुझ को शौहर समझो।"

अथ च स्त्रीणामुन्मुक्तभावं यत्र तत्र सर्वत्र निर्मर्यादं विचरणं, तासामवगुण्ठना-वरणप्रथात्यागं तत्परिणामांश्च दर्श-दर्श कविः कथयति—

"बेपर्दा चन्द बीबियाँ आईं नजर मुझे,
'अकबर' जमी में गैरते-कौमी से गड़ गया।
पूछा जो आगे बढ़ के कि पर्दे का क्या किया?
कहने लगीं—कि अक्ल पै मरदों के पड़ गया॥"

समयानुरोधात् स्त्रीशिक्षाया अनिवार्यतां वीक्ष्य कविराह—

"बे-पास के तो सास की भी अब नहीं है आस,
मौकूफ शादियाँ भी हैं अब इम्तहान पर॥"

पुनश्च—

"तालीमे-दुख्तरों से यह उम्मीद है जरूर;
नाचे दुलहन खुशी से खुद अपनी बरात में॥"

पाठकाः! एतावत्पर्यन्तमकबरस्य महाकवेः काव्यस्य वैचित्र्याण्युपस्था-पितानि। अधुना प्रसङ्गान्तराण्यपि चावलोक्यन्ताम्—

## विदेशियां सभ्यतां प्रति कवेरुद्गाराः

अस्य महाकवेरकबरस्य पुत्रः शिक्षालाभाय विदेशं गतवानासीत्। 'न कदाचित्

स तत्र विमार्गगामी स्यात् ?' इत्याशङ्कया महाकविरयं स्वकीये किलैकस्मिन् पत्रे काव्यमिदं लिलेख—

"इशरती घर की मोहब्बत का मजा भूल गये।
खा के लन्दन की हवा, अहदे-वफा भूल गये॥
पहुँचे होटल में तो फिर ईद की परवाह नहीं;
केक को चख के सवइयों का मजा भूल गये॥
भूले माँ-बाप को अगयार के चरचों में वहाँ;
सायये कुफ्र पड़ा, नूरे-खुदा भूल गये!
मोम की पुतलियों पै ऐसी तबीयत पिघली,
चमने-हिन्द की परियों की अदा भूल गये!
बख्ल है अपने वतन में जो वफा में तुमको,
क्या बुजुर्गों की वो सब जुदो अता भूल गये?
नक्ले-मगरिब-तरंग आई तुम्हारे दिल में,
और ये नुकता कि मेरी अस्ल है क्या, भूल गये!
क्या तअाज्जुब है जो लड़कों ने भुलाया घर को,
जब कि बूढ़े रविशे-दीने-खुदा भूल गये॥"

अत्रोपर्युक्ते काव्यगुम्फे भारतीयाश्छात्रा विदेशं गत्वा स्वदेशं, कुटुम्बपरिवारं, भारतीयं सदाचारं, स्वजातिस्नेहं, स्वदेशाभिमानं, धर्मं, सभ्यतां, संस्कृतिं च सर्वमप्येकपदे विस्मृत्य केवलमाङ्ग्लसभ्यतानुरागं, विलासमयं जीवनमेवाङ्गीकृत्य यथामोदमानास्तिष्ठन्ति, तत्सर्वमपि कविनातीव मार्मिकत्वेन व्याख्यातमास्ते।

ये हि भारतीया राजकीयतन्त्रे सेवां कर्तुमुत्सहन्ते स्म, ते तदानीं आई० सी० एस० इत्याद्याः परीक्षा अहमहमिकयोत्तरन्ति स्म। सेवाप्राप्तये च ते महान्तं परिश्रमं कृत्वातिमात्रं चेष्टन्ते स्म। तद्विधानां भारतीयानां तामिमां हि दासत्ववृत्तिमधिकृत्य कविरसौ बह्वीः सूक्तीर्विरचयामास। एवंविधासु सूक्तिषु कांश्चनाधस्तात् प्रदीयन्ते—

"फज़्ले-खुदा से इज्जत पाई, आज हुए हम सी० एस० आई० ।
शेख न समझे लफ़्ज अँगरेजी, बोले हुए हैं ये ईसाई ॥"

अन्यच्च—

"मुसीबत में भी अब यादे-खुदा आती नहीं उनको;
दुआ मुहँ से न निकली, पाकटों से अर्जियाँ निकलीं ॥"

"शौके-सिविल-सर्विस ने मुझ मजनून को ।
इतना दौड़ाया लँगोटी कर दिया पतलून को ॥"

"तहजीबे मगरबी में हैं बोसे तलक मुआफ;
इससे जो गर बढ़ो तो शरारत की बात है ॥"

"नहीं कुछ इसकी पुर्सिश, उल्फते अल्लाह कितनी है ?
यही सब पूछते हैं—'आप की तनख्वाह कितनी है ?"

## विज्ञानं प्रति कवेरस्य दृष्टिकोणः

कविरयमकबरमहाशयोऽधुनातनीं वैज्ञानिकीं समभ्युन्नतिं विश्वशान्ति-विघातिनी मेने । तामिमामुन्नतिं स स्थाने-स्थाने स्वकवितासु निनिन्द । काश्चन सूक्तयो दृश्यन्ताम्—

"भूलता जाता है योरप आस्मानी बाप को;
बस, खुदा समझा है उसने बर्फ को और भाप को ।
बर्फ गिर जाएगी एक दिन, और उड़ जाएगी भाप;
देखना 'अकबर' बचाए रखना अपने आप को ॥"

अन्यच्च—

"साइंस से भी बढ़ कर मजहब की जड़ बड़ी ।
तोपों की मार से भी खुदा की पकड़ बड़ी ॥"

"इसका पसीजना है और उसके हैं बफारे;
योरप ने एशिया को इंजन पै रख लिया है ॥"

"खुदा की राह में अब रेल चल गई 'अकबर';
जो जान देना हो अंजन से कट मरो एक दिन ॥"
"मालगाड़ी पै जिन्हें भरोसा है 'अकबर';
उनको क्या गम है गुनाहों की गरां-बारी का !"

अन्यदपि —

"जुगराफिये से हाले गवर्नमेण्ट पूछिए;
हम तो यह जानते हैं, खुदाई खुदा की है ॥"

पुनश्च

"तमाशा देखिए बिजली का मगरिब और मशरिक में,
कलों में है वहाँ दाखिल, यहाँ मजहब पै गिरती है ॥"

अन्यच्च —

"हजार साइन्स रंग लाये, हजार कानून हम बनाएँ;
खुदा की कुदरत यही रहेगी, हमारी हैरत यही रहेगी ॥"

अथान्यच्चाप्यवलोक्यताम्—

"चल गई मूसा की लाठी, रह गया जादू का खेल,
साहिरों के साँप को मारा खुदा की मार ने।
रेल काबे तक अगर बन भी गई तो नाज क्या ?
अर्श बारी तक नहीं पाई रसाई तारने ॥"

[ अग्रिमाऽङ्के समाप्यः ]

# शिशिर शैत्यम्

सूक्ति-सिद्धानां
प्राक्तन-कवीनाम्

माषीणां मुषितं यवेषु यवसश्यामा छविः शीर्यते
ग्रामान्ताश्च मसूरधूसरभुवः स्मेरं यमानीवनम्।
पुष्पाढ्याः शतपुष्पिकाः फलभृतः सिध्यन्ति सिद्धार्थकाः
स्निग्धा वास्तुकवास्तवः स्तवकितस्तम्बा च कुस्तुम्बिनी॥

—शुभाङ्गस्य

पाकक्षामतिलाः समुत्सुकयितुं शक्ताः कपोतान् भुवः
श्यामत्वं फलपीड्यमानकुसुमानापद्यते सर्षपान्।
वायुर्व्यस्तशणास्तुषारकणवानभ्येति कम्पप्रदः
पान्थैः शुष्कविवादबद्धकलहैः पुण्याग्निरासेव्यते॥

—योगेश्वरस्य

सिद्धार्थाः फलसूत्रिबन्धगुरुभिर्लोलत्यमी पल्लवैः
उच्छिन्दन्त्यध एव बन्धुरतया कोलीफलान्यर्भकाः।
पाकप्रश्लथपत्रकोषदलन — व्यक्ताङ्कुरग्रन्थयो
निष्ठीवत्यपि हस्तयन्त्रकलिताः पुष्टेक्षुयष्ट्यो रसम्॥

—वाचस्पतेः

इदानीमर्घन्ति प्रथमकलमच्छेदमुदिता
नवाग्रान्नस्थाली परिमलमुचो हालिकगृहाः ।
उदञ्चद्दोर्वल्ली-रणितवलयाभिर्युवतिभिः
गृहीत-प्रोक्षिप्त-भ्रमितमसृणोद्गीर्णमुशलाः ॥

—योगेश्वरस्य

शुकस्निग्धैः पत्रैर्युवतिकरदीर्घैः किशलयैः
फलिन्यो राजन्ते हिमसमयसंवर्धितरुचः ।
मनोज्ञा मञ्जर्यो हरितकपिशैः पांसुमुकुलैः
स्फुटन्ति प्रत्यङ्गं पटुपरिमलाहूतमधुपाः ॥

—शतानन्दस्य

केशानाकुलयन् दृशो मुकुलयन् वासो बलादाक्षिपन्
व्यातन्वन् पुलकोद्गमं प्रकटयन्नङ्गे मुहुर्वेपथुम् ।
वारंवारमुदारसीत्कृतरवैर्दन्तच्छदं पीडयन्
प्रायः शैशिर एष संप्रति मरुत् कान्तासु कान्तायते ॥

—चंकलावर्तकस्य

कम्पन्ते कपयो भृशं जडकृशं गोऽजाविकं ग्लायति
श्वा चुल्लीकुहरोदरं क्षणमपि क्षिप्तोऽपि नैवोज्झति ।
शीतार्तिव्यसनातुरः पुनरयं दीनो जनः कूर्मवत्
स्वान्यङ्गानि शरीर एव हि निजे निह्नोतुमाकाङ्क्षति ॥

—लक्ष्मीधरस्य

करचरणनासामादौ कर्णौ गृह्णाति रक्ततां गमयन् ।
शीतं गुरुकृतपीडं पश्चादङ्गानि कूर्म इव ॥

—वीजकस्य

पृष्ठारोपितकर्पटस्य विसरद्वाष्पाम्बुसिक्तात्मनः
कुब्जीभूततनोर्निविष्टवदनस्याभ्यन्तरे जानुनोः ।
निस्सङ्गं भुजयुग्मपीडनवशाच्छ्वश्वत्कवोष्णो रसः
पान्थस्योद्गतवह्निराशिनिचये याति क्षपा शैशिरी ॥

—कस्यापि

संविष्टो ग्रामदेव्याः कटघटितकुटीकुड्यकोणैकदेशे
शीते संवाति वायौ हिमकणिनि रणद्दन्तपङ्क्तिद्वयाग्रः ।
पान्थः कन्थां निशीथे परिकुथितजरत्तन्तुसन्तानगुर्वीं
ग्रीवापादाग्रजानुग्रहणचटचटत्कर्पटं प्रावृणोति ॥

—कस्यापि

# कविवर !

श्री प्रभात मिश्रः

चित्रय कविवर ! काव्यं नव्यम्,
यतो भवेज्जनताया भव्यम्,

अलङ्काररसरीतिसङ्कुला ,
वामावर्णनमयी मञ्जुला ,
पुरा कृता बहुधा रचना ।
अद्य मुधा तस्या घटना ॥

चित्रय सम्प्रति शस्त्रभङ्कृतिम्,
चित्रय युधि हतहृदयचीत्कृतिम्,
चित्रय हुतात्मजनशौर्यकथाम् ।
चित्रय कृषकाङ्गनाव्यथाम् ॥

विफलकरं शत्रोः सन्धानम्,
चित्रय नवं नवं रण-गानम्,
प्रतिहिंसायाः प्रबलरयात् ।
तरुणानां हृदयं भरतात् ॥

गृहाद् बहिः स्याद् धृतकरवालः,
किं । तरुणः किं बालः,
भवताद् भुवि भूयः सा शक्तिः।
यस्यां स्यात् प्रतिजनानुरक्तिः॥

शत्रुकम्पिका विकराला,
ज्वलतादिह काचिज्ज्वाला,
यया ज्वालया भवेज्ज्वलम्।
शत्रुधरायाः तलं तलम्॥

सदामदीया स्वतन्त्रता।
अक्षुण्णा मम करे स्थिता॥

[ १७-८-६५ तमे दिनाङ्के स्वतन्त्रतादिवसपर्वावसरे आकाशवाणी-प्रयाग-केन्द्रात् संस्कृत-कविसम्मेलने प्रसारितेयं रचना ]

# वाराणसेयसंस्कृतविश्वविद्यालयस्य
## विद्यावारिधि (-पी० एच डी० ) उपाधिकृते स्वीकृतप्रबन्धाः

●

| स्नातकनामानि | प्रबन्धाः |
|---|---|
| | *सन् १९६३ तमेवर्षे* |
| १—श्री मुरारी लाल शर्मा | —ग्रहगणितमीमांसा |
| | *सन् १९६४ तमेवर्षे* |
| २—,, भागीरथ प्रसाद त्रिपाठी | पाणिनीयधातुपाठसमीक्षा |
| ३—,, श्रीमती माया मालवीयः | अथर्ववेदे शान्तिपौष्टिककर्माणि |
| ४—,, श्रीकृष्ण चन्द्र द्विवेदी | सूर्यग्रहणविमर्शः |
| ५—,, आद्या प्रसाद मिश्रः | प्रक्रियाकौमुदीविमर्शः |
| ६—,, विनायक त्रिपाठी | अग्निचयनविमर्शः |
| | *सन् १९६५ तमेवर्षे* |
| ७—,, मुरलीधर चतुर्वेदी | सिद्धान्तसारस्य कौस्तुभस्य सम्पादनं समालोचना च । |
| ८—,, कुबेरनाथ पाठकः | कात्यायन श्रौतसूत्रस्यापस्तम्बबौधायन-श्रौतसूत्राभ्यां सह तुलना । |
| ९—,, स्वामी सर्वदानन्द परमहंसः | शाङ्करवल्लभसिद्धान्तयोः ब्रह्मसूत्रार्थे समीक्षा । |
| १०—,, स्वामी माधवचैतन्य ब्रह्मचारी | शब्दशक्तिः |
| ११—,, श्रीकृष्णमणि त्रिपाठी | पुराणे साङ्ख्ययोगौ । |

# आगतपत्राणि समीक्षणानि च

●

*स्वामिब्रह्माश्रम महोदयानाम्* दि० ८-११-६५
मीरजापुरम्

'तस्मान्निःश्वसिता वेदा' इति श्रौतवाक्येन सकलसंस्कृत-वाङ्मयं भगवतः श्वासप्रश्वासभूतं स्पष्टमिति, अपि च 'अत्यातिष्ठद्दशाङ्गुलम्' इत्यनेन वाक्येनापि श्वासप्रश्वासरूपेण श्रीहरिरेव सर्वत्र विलसति किल, एवं शब्दब्रह्मणोरभिन्नत्वं स्वतः सिद्धम् । अतः शब्दब्रह्मणः प्रकाशकत्वात् जयतु संगमनीयं पत्रिका, तथैव अवतु परकीयभाषा-सम्मोहे निमग्नं स्वजनसमूहम्, आलोकयतु लौकिक-पारलौकिक-वस्तु-विज्ञानम्, संगमयतु सर्वान्तःस्थ-स्वसंविद्रूपैकात्मतत्त्वम् ।

साहित्याचार्य *ब्रह्मानन्दशुक्लमहोदयानाम्* दि० ६-११-६५
खुरजा ।

सुरभारती-प्रसाराय प्रचारायच च बद्धपरिकरां सुसम्बद्ध-संस्कारपरिष्कारपरां संगमनीं समवलोक्य प्रसीदति चेतः । पदार्थसार्थमात्मसात् कुर्वन्तीयं 'संगमनी' सर्वात्मना सर्वदा स्वात्मनामचरितार्थयेदिति कामये ।

साहित्याचार्य
*पंडित महावीरप्रसाद जोशी महोदयानाम्* दि० १५-११-६५
सादुलपुरम्

सुमनोभिर्नमनीया संगमनी पत्रिका जयति ।

गुरुकुलकाँगड़ी विश्वविद्यालयात् १-१२-६५
प्रकाशितायाः काँगड़ी।
*गुरुकुलपत्रिकायाः*

त्रैमासिक संगमनी नाम्नी पत्रिका समालोचनार्थं समधिगता। पत्रिकाया अङ्कद्वयमस्माकं समक्षे विद्यते। समुद्देश्य-साधुसमारम्भश्चस्याः पत्रिकायाः पठनेन ज्ञायते। अप्रकाशितग्रन्थानां प्रकाशनयाजनापि महान्तमानन्दं जनयति। अङ्कद्वये प्रकाशिताः सर्वा अपि कृतयः सुरुचिराः पाण्डित्य-पूर्णाश्च विद्यन्ते। संस्कृत-भाषायाः प्रचाराय संस्कृत-वाङ्मयस्य संवर्धनाय च पत्रिकेयं बद्धपरिकरा सती सततमुन्नतिपथमधिगच्छेदिति अस्माकं कामना।

*'विज्ञानज्योतिः'*— मासिकपत्रस्य १-१२-६५
खुर्जा।

'संगमनी' संस्कृत-त्रैमासिक पत्रिका प्रयाग से प्रकाशित हुई है। संस्कृत-जगत् के लिए इस प्रकार की पत्रिकाएँ होना नितान्त आवश्यक है। यह पत्रिका इस युग में संस्कृत की उन्नति और प्रचार की दिशा में उत्तम कार्य करेगी।

# आस्माकीनम्

●

## स्त्रीणां संन्यासेऽधिकारोऽस्ति किम् ?

स्त्रीणां संन्यासदीक्षायाः प्रथमो निर्णयो महात्मना बुद्धेन कृतः। तस्य महानिर्वाणानन्तरं व्यतीतेषु शताब्देषु बौद्धधर्मे पीक्षिताः संन्यासिनः संन्यासिन्यश्च बौद्धविहारेषु साकं निवसन्ति स्म। अस्य महत् कुफलम् बौद्धधर्मेण भुक्तम्। भारते बौद्धसत्तायाः तिरोभावे स्त्री-संन्यास-दीक्षा-रूप-प्रमादोऽप्येकं कारणं वर्तते।

भगवताऽऽद्यशङ्कराचार्येण बौद्धमतस्य तस्य व्यवहाराणामपि विरोधोऽक्रियत। फलतस्तेन स्त्रीणां संन्यासदीक्षाया अपि विरोधः कृतः। शास्त्रेषु कुत्राप्येतादृशं प्रमाणं नोपलभ्यते येन स्त्री-संन्यास दीक्षाऽभ्युपेतव्या स्यात्।

अद्यत्वे शङ्कराचार्यस्यैवानुयायिनः संन्यासिसम्प्रदायस्य केनचित् महात्मना कुमारी सन्तोषपुरी गीताभारतीमहोदयायै संन्यासस्य दीक्षाऽदीयत। संन्यासिसम्प्रदायेन च गीताभारती महामण्डलेश्वरीति सम्मानेन व्यमण्ड्यत। गीताभारतीमहोदया सुवक्त्री सुबुद्ध-प्रतिभा चास्ति। सा संन्यासिनी भूत्वा परेभ्योऽपि स्वयं संन्यासदीक्षां ददाति। अतः कुमारी सन्तोषपुरी गीताभारती शास्त्रपुराणानि तथाऽऽद्यशङ्कराचार्यप्रणीतमठाम्नायसेतुं चापवाद्यास्माकं पुरतो महान् प्रश्नो बोभवीति। यस्य निराकरणं गण्यमान्यसंन्यासिभिर्महात्मभिर्मण्डलेश्वरैः शास्त्रपारंगतमनीषिभिश्च शास्त्रीयविवेचनापुरस्सरं करणीयम्। अन्यथैषा भ्रमात्मकपरम्परा शास्त्रीयमर्यादां जनताया दृष्टौ प्रकारान्तरेण विघटयेत्। वर्तमानयुगे स्त्रीणां समानाधिकारस्य चर्चा विश्वस्य सामाजिकः सिद्धान्तोऽस्ति। किन्तु शास्त्रीयमर्यादामवलम्बमानाः संन्यासिसमाजाः किमेनं स्वीकुर्वन्ति ? यद्येवं तर्हि तैः स्वविधाने संशोधनं कार्यम। किं ते तथा करिष्यन्ति ?

चैत्रस्तल्पविकल्पनासु वसति श्रीसिङ्गपृथ्वीपते,
त्वां संसेवितुमागतेषु धरणीपालेषु तद्योषिताम् ॥५

अत्र अवयविभूतऋतुप्रक्रमभङ्गरूपानुपपत्तेस्तत्परिहाराय चैत्र इति पूर्वावयवेन अवयविवसन्तो लक्ष्यते ।

सादृश्याल्लक्ष्याऽर्थो यथा नायकस्यैव[1]—

कान्ते कृतागसि पुरः परिवर्तमाने सख्यं सरोजशशिनोः सहसा बभूव ।
रूक्षाक्षरं सदसि[2] वक्तुमपारयन्त्यामिन्दीवरद्वयमवाप तुषारधाराम् ॥६

अत्र सरोजादीनां मुख्यार्थानन्वयेन तत्सदृशः करतलादिलक्षणार्थो[3] सादृश्यनिबन्धनया लक्षणया लक्षते[4] ।

शब्देनाऽर्थेन वा लक्ष्यो व्यञ्जनासहचारिणा[5] ।
व्यङ्ग्यार्थो[6] वस्त्वलङ्काररसभावादिलक्षणः ॥३॥

अत्राद्यो यथा[7]

लीलालोकनलोलुपं मृगकुलं गन्ता गुहान्तानिमां,
स्तत्रत्यग्रसन[8]व्रतीह भविता द्वीपेरुषोद्दीपितः ।
याता तन्मृगयारतेर्वनमिदं श्रीसिङ्गभूपोरया—
दित्याविर्भयमादिशन्त्यरिनृपा स्त्रीणामनीक्षात्रत्वम् ॥७

अत्र परिलीनशत्रुभूवरगिरिगुहानायकेन नाक्रान्ता इति यत् तदिदं दुर्गबुध्या न भवति, किन्तु पलायितानानुयातरथ्या इति मनीषयेति वस्तु व्यज्यते ।

---

१. नायवश्चैव, क० । २. सहशिवक्तुमपायत्त्या, क० । ३. लक्षणार्था, ख० । ४. लक्ष्यन्ते, ख० । ५. "शब्देनार्थेन वार्थो क्षां व्यञ्जना सहचारिणी" ति ख—पुस्तकस्थपाठंस्तु नोचितः, क—पुस्तके एतावानंशः त्रुटितः । अनुमानेन 'लक्ष्यः' इति प्रतीयते । ६. व्यंगार्थो, क० । ७. तत्र आर्थ्यो, ख० । ८. प्रति, क० ।

द्वितीयो यथा—

पृथ्वीं श्रीसिङ्गभूपे वहति फणवतामीशितारं प्रमोदा-
दाकल्पं केलितल्पं कलयितुमनसोरादिपुंसोर्विरोधे ।
भूमौ भारप्रसंगात्पुनरपि पतितात्केलितल्पापदेशा-
दाकल्पत्येकयोग्यं भुजग इति पदं त्रायते ख्यातपूर्वम् ॥८

अत्र नायकस्य सर्वेषु[2] राजसु सेवकेषु रणाभावादलब्ध[3]नवकपालस्य कपालिनो जीर्णकपालमालिकास्थाने भूभारविमुक्तं शेषाहिं निवेशयितुकामस्य[4] वेत्युत्प्रेक्षालङ्कारो व्यज्यते । किञ्च नायकेनैव जगत्प्राणभारनिर्वहणादाश्वस्तस्य नारायणस्य निद्रामाकांक्षत इवेति चैतेनैव[5] प्रतीयते ।

रसरूपस्तृतीयो यथा—

श्रीसिङ्गक्षितिनायकस्य रिपवो धाटीश्रुते[6]राकुलाः
शुष्यत्तालुपुटं स्खलत्पदतलं व्यालोकयन्तो दिशः ।
धावित्वा कथमप्युपेत्य तमसा गाढोपगूढां गुहा-
मन्विष्यन्ति तदन्तरेऽपि करसंस्पर्शेन गर्तान्तरम् ॥९

अत्र नायकविरोधिसमाश्रयो भयानको रसोऽनुजीविविभावादिभिरसंलक्ष्य-क्रमतया व्यज्यते ।

भावरूपश्चतुर्थो यथा नायकस्यैव—

शृङ्गारवीरसौहार्दमौग्ध्यवैयात्यसौहृदम्[7] ।
लास्यताण्डवसौजन्यं दाम्पत्यं तद्भजामहे ॥१०

---

१. आकल्पतु, क० । २. ख—पुस्तके नास्ति । ३. रणाभावात्, [illegible] । ४. कामस्यदे, क० । ५. आकाङ्क्षित इति च तेनैव, ख० । ६. धाटिश्रु, क० । ७. सुहृदम्, क० ।

अत्र मौग्ध्ये[1]त्यादौ विरुद्धगुण-घटनया लास्येत्यादौ विरुद्धक्रिया घटनया दाम्पत्यमित्यत्र विरुद्धजाति-घटनया वाऽचिन्त्यैश्वर्यप्रतिपादकोऽर्धनारीश्वरलक्षणाभिमत-दैवतगोचरो वक्तुः भक्तिभावो व्यज्यते । एवमन्योन्यादि[2]-शब्दग्राह्यरसभावादिरूपाः व्यङ्ग्यार्थास्तत्र तत्रोदाहरणे द्रष्टव्याः ।

अथार्थदोषाः—

अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।
परुषं विरसं भिन्नमतिमात्रमनुज्ज्वलम् ॥४॥
नीचाधिकास[3]दृक्षोपमा नान्यप्रथितोपमम्,
अश्लीलञ्च विरुद्धञ्च दोषाः काव्यार्थगोचराः ॥५॥

अत्रापार्थमित्यादौ[4] भावप्रधाननिर्देशान्नपुंसकत्वमवगन्तव्यम् ।

समुदायार्थ-शून्यं यत्तदपार्थ[5]मितीरितम् ।

यथा—

चैत्ये शम्भोवर्दनदशके वीक्ष्य[6] दीर्घं कराग्रं,
मत्वा दुर्गा लवणधनुषे कामदेवाय हुँ फट्[7] ।
इत्याराध्य[8] प्रणवमुखरे प्राञ्जलौ[9] पारशीके[10]
तुष्टा लक्ष्मीर्वितरति शुभं सिङ्गभूपालकाय ॥११

अत्र परस्परासङ्गतत्वात्समुदायार्थशून्यता स्पष्टैव ।

व्याकुलोन्मत्तवाक्यादौ तद्गुणीभूय भूषयेत् ॥६॥

---

१. मौग्ध, क० । २. मन्येत्यादि, क० । ३. स इति क—पुस्तके नास्ति । अर्थां, क० । ५. यत्त पार्थम्, क० । ६. विक्ष्य, क० । ७. एतावानंशः क-पुस्तके टितः । ८. इत्यारोप्य, क० । ९. अपाठ्योऽयमंशः क-पुस्तके । १०, पारशीकौ, ख० ।

व्याकुलभावे[1] यथा—

को वा जेष्यति सोमवंशतिलकान[2]स्मान् रणप्राङ्गणे,
हन्तास्मासु पराङ्मुखो हतविधिः किं दुर्गमध्यास्महे।
अस्मान्पूर्वनृपानयं निहतवान् दीर्घा[3]न्धिगस्मद्भुजान्,
किं वाक्यैरनपोत[4]-सिङ्गनृपतेः सेवैव कृत्यं पदम्[5] ॥१२

अत्र वाक्यार्थानां परस्परा[6]सङ्गतत्वेऽपि नायकजैत्रयात्रासमाकर्णन-व्याकुलानां प्रत्यर्थिपार्थिवानां नानाभावशाबल्यसूचकत्वाद्गुणत्वम्।

उन्मत्तभावे यथा—

औत्सुक्यादनपेत[7]-सिङ्गनृपतेराकारमालिख्य सा
निर्वर्ण्योऽयमसौ मम प्रिय इति प्रेमाभियोगभ्रमात्।
आशुद्धाय[8] ततोऽपसृत्य तरसा किञ्चिद्विवृत्तानना,
सासूयं सदरस्मितं सचकितं[9] साकाङ्क्षमालोकते ॥१३

अत्र चित्रमुद्दिश्य आशुद्धानापसरण[10] दृष्टिविकारादीनामर्थानामसङ्गतत्वेन समुदायाऽर्थशून्यत्वेऽपि रागोत्कर्षप्रतिपादकसमस्तकामावस्थासूचकत्वाद्गुणत्वम्।

व्यर्थमाहुर्गतार्थं[11] यद्यच्च स्यादप्रयोजनम्।

यथा—

नेत्राभ्यामवलोक्य[12] सिङ्गनृपतिं द्वाभ्यां रणे विद्विषः,
सव्याहै[13]रभियान्ति सम्प्रति भटानालोक्य गर्वोद्धतान्।

---

१. व्याकुलतो यथा, क०। २. सोमवंशतिलको, क०। ३. दीर्घा, क०। ४. अनपेत इत्युचितम्। ५. किं वाक्यैरनवोत सिङ्गनृपते सेवैव कृत्या [मरण] इति क-पुस्तकस्थः पाठः। ६. परस्पर, क०। ७. अनवोत, क०। ८. अशुद्धाय, क०। ९. सचिकितम्। १०. अशुद्धानाववसरण, क०। ११. नतार्थं, क०। १२. अवलोक, क०। १३. सध्याहैः, ख०।

दोष्णा स्वेन निजं कृपाणमवते[1] तत्खड्गधारां गता—
स्ते स्वस्त्रीकुचकुम्भयोर्मृगमदं लुम्पन्ति लुम्पन्ति च ॥१४

अत्र अवलोक्येत्यनेनैव नेत्राभ्यामित्यनेनैव द्वाभ्यामिति दोष्णा[2] कृपाणमवत इत्यनेनैव स्वेन निजमिति चार्थसामर्थ्या[3]देवावगतेर्नेत्रादीनाङ्गतार्थत्वम् । सूरैस्त्री-मृगमदलेपनक्रीडयैव रिपूणां[4] कथाशेपत्वावगते स्वस्त्रीति[5] शब्दश्लेपसामार्थ्यलब्ध-निजस्त्रीकुचकुम्भमृगमदलेपनक्रियाया अप्रयोजनत्वात्[6] व्यर्थत्वम् ।

इदं गुणपदं याति विशेषश्चेद्विवक्ष्यते ॥७॥

गतार्थस्य यथा—

आलोपै[7]राश्चर्यादधि-चलित-लज्जापरिमलैः
प्रमोदादुद्वृत्तैश्चकितहरिणी-वीक्षणसखैः ।
अमन्दैरौत्सुक्यात्प्रणयलहरी - मर्मपिशुनै—
रपाङ्गैः सिङ्गक्ष्मारमणमबला वीक्षितवती ॥१५

अत्र नायकमबलावीक्षितवतीत्यनेनैवानन्य[8]-सिद्धेनावगनस्यापाङ्गैरित्यस्य गतार्थत्वेऽपि निष्पन्दत्वलज्जापरिमलादिविशेपविवक्षयोपात्तत्वाददोषः ।

अप्रयोजनस्य यथा—

सङ्कल्पैरनपोत[9] सिङ्गनृपतौ संरूढमूलाङ्कुरै[10]—
राक्रान्ता तनुतां गता स्मरशरैः शान्तेव[11] शातोदरी ।
अस्मन्मूलमिदं तनुत्वमिति किं लज्जालसे लोचने,
प्राप्ते पक्ष्मपुटव्रतिं[12] रतिपतेस्तत्केतनं जृम्भताम् ॥१६

---

१. अयते, ख० । २. दोष्ण, क० । ३. साम्यादेव, ख० । ४. परिपूर्णाम्, ख० । ५. स्वस्त्रि, क० । ६. अप्रयोजत्वाद्, ख० । ७. अत्र वृत्त-दृष्ट्या अलोपैरित्युचितम् । क-पुस्तके अलोपैः इति नाऽस्ति । ८. नस्य, ख० । ९. अनवोत, क०, अनपेत इत्युतम् । १०. मालाङ्कुरैः, ख० । ११. शातेव, क० । १२. पक्ष्मपुटावृत्तिः, क० ।

अत्र मीनविजृम्भणकथनस्य प्रकृतावस्थानुपयोगित्वेनाप्रयोजकत्वेऽपि लोके प्रायेण परिभूतानां[1] पराभवितुरापदं विना विजृम्भणञ्च[2] सम्भवतीति लोचनयोरपुनरुन्मीलनसूचनेन नवमावस्थायाः पराकाष्ठा प्रतीयत इति गुणत्वमुक्तम् ।[3]

उक्ताभिन्नार्थमेकार्थं

यथा —

संरक्षितां वेतनमाननाभ्यां करोति सेनां विनिहत्य शत्रून् ।
कल्याणभूपो विनिहत्य शत्रून् बलानि संरक्षति[4] वेतनाद्यैः ॥१७

अत्र पूर्वोत्तरार्धयोरपृथगभिप्रायत्वादेकार्थत्वम् ।[5]

रसोद्रेकेत्विदं[6] गुणः ।

यथा —

कुमारश्रीसिङ्गे जलधिरशनां शासति[7] महीं—
ममर्यादां ध्वस्ताः[8] पतनपरिणाहप्रतिभुवः ।
अधर्मा[9] निर्मूला नरक-परिपाक-प्रणिधयो
विनष्टा दुश्चेष्टाः कलिकलुषवेशीपरिधयः[10] ॥१८

अत्र द्वितीयादिषु पादेषु भिन्नार्थत्वाभावेऽपि केनचिदधर्म-गन्धोऽप्यस्मद्देशे न विदधते[11] इति[12] वाचा धर्मप्रतिष्ठापकस्वामिपक्षपातातिशयोपक्षिप्तं सोद्रेकेण चेतसाभिहितत्वाद्गुणत्वम् ।

सन्देहदायकार्थं[13] यत्तत्संशयमीरितम् ॥८॥

---

१. परिभूतां, ख० । २. विजृम्भणम्, ख० । ३. क-पुस्तके उक्तम् इति न दृश्यते । ४. संरक्षित, क० । ५. एकार्थम्, क० । ६. 'त्विदम्' नास्ति ख-पुस्तके । ७. शासति, क० । ८. ध्वस्तां, ख० । ९. अधर्मा, क० । १०. पारधयः, क० । ११. विद्यते, क० । १२. क-पुस्तके 'त्रिवान्' इत्यधिकः । १३. सन्देहाधायकार्थम्, ख० ।

यथा—

श्रीसिङ्गभूपधाटीषु विद्विषो हीन-साधनाः[१] ।
सालश्रेणि[२]मुपाश्रित्य कुर्वते जीवनं तृणम् ॥१६

अत्रहीनसाधना विद्विषः सालश्रेणिं प्राकारपङ्क्तिमाश्रित्य[३] जीवनं प्राणान् तृणं कुर्वते तृणाय मन्यन्ते[४] इत्यर्थः, अथवा सालश्रेणिं वृक्षवाटिकामाश्रित्य हीनसाधनाः तृणजीवनं प्राणधारणं कुर्वत इति च नासत्प्रतिपक्षत्वमसत्प्रतिपक्षत्वं वेति संशयप्रतीतेः ससंशयमिदम् ।[५]

उत्कर्षादिविवक्षायामस्याऽपि[६] गुणगौरवम् ।

यथा—

कोकिलस्पर्धिसल्लापा मृगवैरिविलोचनाः ।
वामा श्यामा वशीकर्तुं नेशते सिङ्गभूपतिम् ॥२०

अत्र कोकिलस्पर्धिनः कोकिलस्वरवत् कला मधुरास्सल्लापा यासां ताः[७] वामा[८] रम्याः श्यामा युवतयो नायकं वशीकर्तुं नेशते न शक्ता इत्यनेन स्त्रीव्यसनमस्य नास्तीति उत कोकिलस्पर्धिनां काकानां सल्लापा इव सल्लापा यासां ताः मृगवैरिणः सिंहस्य लोचने इव पिङ्गले लोचने यासां ताः, वामाः वक्राः[९] श्यामाः कालाङ्ग्यः एवं वशीकर्तुं नेशते इति अनेनानुत्तमासु काकसात्त्विकाद्यासु[१०] स्त्रीषु न रमते इति कामशास्त्र-परिज्ञानमस्तीति वा सन्देहे उभययापि[११] नायकोत्कर्षप्रतीते[१२] रिति गुणत्वम् ।

पौर्वापर्यविपर्यासो यत्र स्यात्तदपक्रमम् ॥६॥

---

१. हीनसाधनाः, क० । २. सालश्रेणिम् ख० । ३. प्रकारपङ्क्तिम्, ख० । ४. तृणोऽयमश्नन्त, क० । ५. असंशयमिदम्, ख० । ६. अस्यादि, ख० । ७. मृगवैरिणि मृगलोचनतुल्यानि लोचनानि यासां ताः—एतावानंशः ख-पुस्तके अधिकः । ८. वामरम्याः, ख० । ९. वामवक्राः, ख० । १०. काकस्याराध्यासु, ख० । ११. उभयता, क० । १२. प्रतीतिः, क० ।

यथा—

घोराजिरङ्गे प्रतिपक्षभूपाः श्रीसिङ्गभूपालवसुं विलोक्य ।
कुर्वन्ति मौहूर्तिकसार्वभौमैः[१] प्रयाणहोरापरिशोधनानि ॥२१

अत्र पूर्वं पुरान्निर्गत्य प्रतिपक्षभूपैः पश्चादतिक्रान्तप्रयाणलग्नपरिशोधनं क्रियत इत्यपक्रमत्वम् ।

चित्रहेत्वादिषु प्रायो गुणतामस्य[२] तन्वते ।

यथा—

पश्चान्मुञ्चति ते चित्तं क्षमां श्रीसिङ्गभूपते !
पुरस्तादेव मुञ्चन्ति पौरस्त्या भूभुजः क्षमाः ॥२२

अत्र पूर्वभाविना नायकचित्ते तितिक्षामोक्षणस्य हेतोर्हेतुमतः पश्चाद्भाविनः प्रतिराजनिजदेशमोक्षणस्य च पौर्वापर्यं[३] विपर्यासादपक्रमत्वेऽपि नायकतितिक्षा[४]मोक्षणस्य देशमोक्षण[५] लक्षण-प्रतिराज-साध्वसाद्दीपनप्रकर्ष-प्रकाशनपरत्वाददोषः ।

प्रत्यक्षनिष्ठुरार्थं यत्परुषं तन्निगद्यते ॥१०॥

यथा—

गण्डग्रावतले निपातयत वा गर्तान्तरे दत्त वा
व्याघ्राणां पुरतः परिक्षिपत वा व्याक्रोशतो बालकान् ।
हन्तामी परितो वनं[६] मृगयतः क्ष्मापालचूडामणेः[७]
वर्तन्ते भवतीभिरद्य हि[८] वयं सर्वेऽपि दाहामहे ॥२३

अत्र नायकचमूधाटिभयेन[९] गिरिगुहासु[१०] लीनानां कुलेन कुटुम्बिनीरुद्दिश्य बालकरोदननिवारणाभिप्रायमात्राण्यपि प्रत्यक्षे रूक्षार्थान्यक्षराणि गदितानीति[११] परुषत्वम् ।

---

१. सार्वभौमः, क० । २. वृन्वते, क० । ३. हेत्वापत्या इति ख—पुस्तके अधिकः पाठः । ४. तितिक्ष, क० । ५. माक्षण, क० । ६. नवं, ख० । ७. अत्र सम्बोधनविभक्तिरुचिता । ८. अप्य हि । ९. धाटीभयेन, ख० । १०. गिरिगुहानु, क० । ११. रूक्षार्थस्य क्षराणि गदितानिति, क० ।

# SAṄGAMAṆĪ

*Sanskrit Quarterly Magazine*

Edited by
*Prabhat Shastri, Sahityacharya*

Annual Subscription
Rs. Twelve only
Rs. 3/50 per copy
[ IN FOREIGN ]

Published by Prabhat Shastri for Sanskrit Sahitya Parishad,
Ḍaraganj, Allahabad-6 ( India ) and Printed by him
at Nagari Press, Daraganj, Allahabad-6 (India)

# संगमनी

# Sangamani

Sanskrit Quarterly

संस्कृत-त्रैमासिकी


प्रथमवर्षे चतुर्थोऽङ्कः

वसन्तर्तुः, २०२२ वैक्रमाब्दः


●


सम्पादकः

**प्रभात शास्त्री**

सहसम्पादकौ

**तारिणीश झाः**
व्याकरणवेदान्ताचार्यः

**जयशङ्कर त्रिपाठी**
साहित्याचार्यः, एम्० ए०


●


प्रयागस्थ-संस्कृत-साहित्य-परिषदः प्रकाशनम्

कार्यालयः
संगमनी
दारागंज—प्रयागः

वार्षिकं मूल्यम्
५.०० रु०
प्रत्यङ्कम् रु० १.५०

सम्पादन-समज्या

श्री बालकृष्णरावः (प्रयागः) ● डॉ हरवंशलाल शर्मा (अलीगढ़ः)

डॉ० विद्यानिवास मिश्रः (गोरखपुरम्)

●

लक्ष्यं योजना च

● इयं संगमनी संस्कृतस्य निःस्वार्थसेवाया नामान्तरम् ।

● अस्यां संस्कृतवाङ्मयविषये गवेषणापूर्ण-लेखानां परिचर्चायाश्च प्रकाशनम्,

● संस्कृतभाषाया अप्रकाशितग्रन्थस्य मुद्रणं च भवति ।

● अनया संस्कृतवाङ्मयस्य संस्कृतभाषायाश्च प्रचाराय प्रसाराय च प्रयत्नो विधीयते ।

# संगमनी

अहं राष्ट्री संगमनी वसूनाम्

—ऋग्वेदे १०।१२५।३

वर्षे ● संवत् २०२२ वि०, वसन्ततुः ● ४ अङ्कः

## पातु वः

मातर्ब्रूहि किमेतदञ्जलिपुटे
तातेन गोपायितम्,
वत्स ! स्वादु फलं, प्रयच्छति न मे,
गत्वा गृहाण स्वयम् ।
मात्रैवं प्रहिते गुहे विघटय—
त्याकृष्य सन्ध्याञ्जलिम्,
शम्भोर्भग्नसमाधिरुद्धमनसो
हास्योद्गमः पातु वः ।

—सूक्तिकवेर्योगेश्वरस्य

●

# कर्तुमर्हामः

तत्रभवान् महामहिम—
डॉ० सर्वपल्ली राधाकृष्णन्

१ श्रीमन्तः कुलपतिमहाभागाः, श्रद्धेया विद्वांसः, संस्कृतविश्वविद्यालयीयाः स्नातकाः, देव्यः, सज्जनाश्च !

अस्य संस्कृतविश्वविद्यालयस्य प्राधिकारिणो यन्मां विशिष्टसत्कारेण सम्मानोपाधिना सभाजनार्थम् अष्टमदीक्षान्तसमारोहावसरे दीक्षान्तभाषणार्थं च आमन्त्रितवन्तस्तदर्थं तेभ्यः कृतज्ञतामावहामि। विद्वद्धौरेयाणां समवाये किञ्चिद् प्रवक्तुं नाहम् आन्तरं सौकर्यमनुभवामि तथापि भवतामौदार्यस्य सद्भावनायाश्च कृते कृतज्ञतां प्रकाशयितुमत्रागमने कृतमतिरभूवम्।

"भवतां विश्वविद्यालयेन समुपचीयमानं संस्कृतस्याध्ययनमस्माकं देशस्य जीवनभूतं समग्राय विश्वस्मै शिक्षाप्रदं च।

भाषा हि मनुष्यान् पश्वादिभ्यो भिनत्ति। संसारस्य भाषासु संस्कृतभाषा कदाचित् प्राचीनतमा। इयं हि सा भाषा या साङ्गं संघटनं वर्णानां नैसर्गिकार्थबोधौपयिकीं प्रकृष्टां क्षमतां च बिभर्ति। अनया चैतादृशी लिपिः प्रयुज्यते यत्र

१. वाराणसेयसंस्कृत-विश्वविद्यालयस्य अष्टमे दीक्षान्तसमारोहे कृतं दीक्षान्त-भाषणम्।

वर्णाः सङ्केतैरेव अर्थमवद्योतयन्ति न तु विचित्रचित्राकृतिभिः। पाणिनीया वदन्ति--

"एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति"।

एकः शब्दो यथाशास्त्रं सम्यगवगतो यथोचितं प्रयुक्तश्च पौराणिकी धेनुरिव इह परत्र च सर्वान् कामान् प्रसूते। एतस्या वाङ्मयं विशालं विस्तृतं सर्वविषयाभिव्यापकं च। छान्दोग्योपनिषदि तदानीमध्याप्यमानाना विद्यानां सूची समुपलभ्यते यस्यां देवविद्या, ब्रह्मविद्या, भूतविद्या, क्षत्रविद्या, नक्षत्रविद्या, सर्पदेवजनविद्यादयः समाविष्टाः।

ऋग्वेदो हि विश्वस्य कदाचित्प्रत्नतमं साहित्यं यस्तया विशुद्धतयाऽक्षुण्णं रक्षितो या विश्वमानवाना साहित्येषु अन्यत्र कुत्रापि अशक्या। दर्शनस्य धर्मस्य च क्षेत्रे अस्य योगदानम् उत्कृष्टतमम् आध्यात्मिकमूल्येषु चास्य अभिनिवेशः सुप्रस्थितः।

दुर्लभं त्रयमेवैतद् दैवानुग्रहहेतुकम्।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः॥

त्रयमेतद् दुरावापं मानवता, मुमुक्षुता, महापुरुषसंश्रयश्च; तद्दैवानुग्रहादेव लभ्यते।

धर्मस्य मुख्यतम लक्ष्यं परमतत्त्वसाक्षात्कारः यः आत्मानुभवो ब्रह्मानुभवो वा तथा वा यथा भगवद्गीतायां कृष्णार्जुनसंवादे प्रत्यपादि।

श्रुतिं पश्यन्ति ऋषयः।
संस्काराज्जन्यं ज्ञानं स्मृतिः॥

अयमेव हि श्रुतिस्मृत्योर्मौलिको भेदः, यद् वेद-ऋषिभिः साक्षाद् दृष्टः स्मृतिश्च अतीतानुभवप्रभवा। धर्मो नूनं सिद्धादेशात्मको भवतु न तु केवलं दार्शनिकः क्रियात्मको वा। तथा च सूक्तिः—

साधूनां दर्शनं पुण्यं स्पर्शनं पापनाशनम् ।
एतामात्मानुभूतिमधिगन्तुं चारित्र्यपूर्णता परमावश्यकी ।

पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः ।
न पापफलमिच्छन्ति पापं कुर्वन्ति यत्नतः ॥

मानवो हि पुण्यस्य फलं तु कामयते परं तदाचरितुं न चेष्टते । पापफलं च नाकाङ्क्षते परं सप्रयत्नं पापमाचरति । अस्या दुःस्थितेरेष निष्कर्षो यद् वयं धर्मं जानन्तोऽपि सङ्कल्पदौर्बल्यादवस्थितिपारवश्याद्वा तत्र न प्रवर्तामहे । प्रवृत्तिक्रमं कलुषं विदन्तोऽपि वयं तत्परिवर्त्तने न प्रभवामः । मनुष्याणां कृते न किंचिदपि अणीयो महीयो वा ।यदि वयं पुण्याचरणपरम्परया स्वात्मानमुन्नततरां भूमिमुन्नयेमहि परमार्थसत्यसाक्षात्कारक्षमतां च लभेमहि तदा तद्वर्णनं प्रतीकैः सङ्कल्पचित्रैरेव वा शक्यसम्भवम् । यद्धि परमतत्त्वं वयमधिगच्छामस्तन्निःशेषेण निरूपयितुं न शक्नुमः । अतः स्खलद्वर्णनमेव तस्य प्रतिपद्यते । अस्मादेव हेतोरेतत्सन्दर्भेऽस्माकं शास्त्राणि सहिष्णुतागुणं साग्रहमुपदिशन्ति । सर्वधर्मसमादरसिद्धान्तं च देशोऽयमनुरुणद्धि । इदमेव च परमं वचो गीतायाः सुदृढमनुशास्ति ।

ये यथा मां प्रपद्यन्ते तां तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ ! सर्वशः ॥

ये जना मां यथा उपगच्छन्ति अहं तान् तथैव स्वीकरोमि । हे पार्थ ! जनाः सर्वत्र सर्वथा मामेव अनुधावन्ति ।

न केवलं विचारेणैव अस्माभिरिदं स्वीकरणीयम् अपि तु अन्यान् सर्वानेव उपासनाप्रकारान् प्रति सहिष्णुभिर्भूत्वाऽनुभवितव्यमपि ।

यदि वयम् आत्मनोऽनुभूतेः सत्यतां तत्प्रापकान् मार्गभेदान् वैयक्तिकजीवनस्य नैतिकपरिष्करणावश्यकतां च अभिनिविशामहे, तदा वयम् आत्मनः श्रेयसे विश्वकल्याणाय च किमपि सारभूतं कर्तुमर्हामः ।

यस्मिन् संसारे सदाचाराः परिपालनीयाः स खलु यद्यपि सन्नास्ति, तथाप्यसन्नपि न भवति ।

ये हि स्नातकाः स्त्रोपाधिं लब्धवन्तः सविशेषं पुरस्कृताश्च तेषां समेषां भाविजीवने मदीयाः शतशः शुभकामनाः । कामं ते जीवने प्रोद्योतमानान् पुरस्कारान् न प्राप्नुयुः, किन्तु ततोऽपि विशिष्टतरां मनस्तुष्टिं नूनं प्राप्स्यन्त्येव ।

---

## गर्वोक्तिः

विन्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोविन्दुकम् ,
कर्मेत्यन्वयकल्पनां विदधते ये केऽपि तेभ्यो नमः ॥
ये तु ग्रन्थसहस्रशाणकषणत्रुट्यत्कलङ्कैर्गिरा--
मुल्लासैः कवयन्ति वल्लणकविस्तेष्वेव सन्नह्यते ॥

--वल्लणस्य

---

# चिद्गगनचन्द्रिकाकारः कालिदासः

श्रीबटुकनाथशास्त्री खिस्ते

कविकुलगुरोः कालिदासस्य कृतिषु रघुवंशादिमहाकाव्यत्रयं शाकुन्तलादिनाटकत्रयं च एकस्यैव रचयितुः प्रतिभाप्रसूतिरिति निर्विवाद एवाऽस्ति विदुषां परामर्शः।

सन्त्यन्येऽपि भूयांसः संक्षेपविस्तराभ्यामुपनिबद्धाः प्रबन्धाः कालिदासनाम्ना लब्धगौरवाः, परं सर्वेषां कालिदासकृतत्वं न सम्भवति इति बाह्याभ्यन्तरपरीक्षाभ्यां व्यवस्थापयन्ति पण्डिताः।

प्रसंगेऽस्मिन् कालिदासचर्चायामुपेक्षितप्रायस्य एकस्य आगमशास्त्रीयस्य प्रबन्धस्य विषये काचिद्विचारदृष्टिः अवतार्यते, तस्याः सत्याऽसत्यत्वविषये विद्वद्वरेण्या एव निर्णेतारो भविष्यन्ति।

चिद्गगनचन्द्रिका नाम पद्यमयः प्रबन्धः प्राचीनो महद्भिर्विद्वद्भिस्तत्र तत्र प्रमाणतया परिगृहीतश्च वर्तते। कलकत्तानगरीतः प्रकाशितायां 'तान्त्रिकटेस्ट' संज्ञकग्रन्थमालायां मुद्रितमिदं ग्रन्थरत्नं आरनाल्डएवले, स्वामिविक्रमतीर्थमहोदयाभ्यां परिष्कृत्य सम्पादितमुपलभ्यते। द्वितीयमस्य संस्करणं तु आन्ध्रदेशीयेन विदुषा कर्रा अग्निहोत्रशास्त्रिणा स्वटीकया संयोज्य प्रकाशितं कदाचिद् दृष्टमस्माभिः।

न ह्यमूला जनश्रुतिः इति न्यायेन सत्यपि महति कालव्यवधाने कवेरस्य भगवत्याः काल्याः प्रसादेन निरर्गलं कवित्वं सर्वतोमुखी प्रतिभा सिद्धिश्च

समुपजातेति स्वीक्रियते, तत्र-तत्र कालिदाससम्बन्धिषु स्थानेषु कालिदासोपासिता काली काचिदन्या देवी वा परम्परया ख्याता प्रदर्श्यते जनैः ।

यथाऽत्र उज्जयिन्यां, कालिदासीयत्वेन ख्याते मिथिलायाम् उच्चैठ नाम्नि स्थाने वा भगवत्याः स्थानं प्रसिद्धिमनुबध्नाति ।

किं च कुमारसम्भवे शिवविवाहस्य वरयात्रायां—

तासांच पश्चात्कनकप्रभाणां कालीकपालाभरणा चकासे ।
बलाकिनी नीलपयोदराजिदूरं पुरःक्षिप्तशतह्रदेव ॥

इत्येतत्पद्यमपि कवेरुपास्यदेवतासम्बन्धसूचकं भवितुमर्हति । अन्यथा मातृकाणां वर्णने कृतेऽपि विशिष्य कालिकायाः पृथग्वर्णने कवेः को हेतुः स्यात् ?

कालिदासः काश्मीराभिजन इत्यपि केचित्साधयन्ति, तदनुसारं यदि विचार्यते ततः संगतमिदं प्रतिभाति । तथाहि चिद्गगनचन्द्रिकायां वर्णितं कालोकालीतत्त्वं वा काश्मीरेषु परम्परया प्रवृत्तस्य शैवप्रत्यभिज्ञादर्शनस्यैव शाखाविशेषेऽन्तर्भवति । यत् किल क्रमदर्शननाम्ना महार्थदर्शननाम्ना वा व्यपदिश्यते पण्डितैः । एतद्विषये परिचयः पण्डितकान्तिचन्द्र-पाण्डेयमहोदयैर्लक्ष्मणपुरविश्वविद्यालयस्य भूतपूर्वप्राध्यापकैः स्वप्रबन्धेषु विस्तरेण प्रदत्त इति तत्रैवाऽवलोकनीयः ।

चिद्गगनचन्द्रिकायाः प्रारम्भे पद्यद्वयं दृश्यते, प्रथमं गणेशस्मरणपरं द्वितीयं चेदम्—

स्थूलं सूक्ष्मं परं च त्रिविधमिह जगद् यत्प्रथावेशसिद्धं,
युक्तं सत्ता यदीया स्फुरति च परतःस्वप्रथैकस्वभावा ।
भामूर्तिर्यं विमर्शक्रियमनुपतिता लक्ष्यते लोकवृत्तिः,
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥

इह कालिदासचन्द्रप्रसूतिरानन्दिनी स्तुतिव्याजात् ।
चिद्गगनचन्द्रिकाब्धेः शमयतु संसारदावदवथुं वः ॥

अत्र पूर्वश्लोके मालविकाग्निमित्रगतस्य मंगलाचरणस्य चतुर्थः पादः समग्र एवोद्धृतः । विमर्शचतुष्टयात्मकेऽस्मिन् ग्रन्थे पर्यवसानेऽपि स्वनाम समुपात्तं कविना, यथा —

सिद्धनाथकृततत्क्रमस्तुतेः
काळिदासरचितां च पंचिकाम् । इति

कालिदासपदवीं तवाश्रित—
स्त्वत्प्रसादकृतवाग्विजृम्भणः । इति च

अत्र त्वत्प्रसादकृतवाग्विजृम्भणः इति विशेषणं किवदन्तीपक्षानुकूलं प्रतिभाति। प्रबन्धोऽयं गहनतरशास्त्रीयसिद्धान्तगर्भिततया प्रायो दुरूह एव तद्विषयाऽनभिज्ञानाम् । काव्यनाटकादिसमुचिताया भाषाया अभावोऽपि तन्मूलकतयैव समाधातुं शक्यते । एतद्विद्यासम्प्रदायः काश्मीरेषु तदनु चोलकेरलादिदेशेषु लब्धप्रसार आसीत् इति तत्तद्ग्रन्थकाराणां दर्शनादवसीयते । यतो महार्थमंजरीनिर्माता महेश्वरानन्दः चोलाभिजनो बभूव, तेन काश्मीरग्रन्थानामुद्धरणं, स्वस्य तदनुगामित्वं च स्पष्टतया प्रतिपादितमस्ति ।

कालिदासनाम्नो व्युत्पत्तिरपि पद्ये पुरो निर्दिष्टे प्रदर्शिता चिद्गगनचन्द्रिकायां यथा—

वृत्तिदीप्तिनयनैर्विलक्षणैर्वीक्ष्य कालिमहिमाऽनुवर्ण्यते ।
केवलं तदनुवर्ण्यतेऽप्युमे त्वन्मुदे तदपि दासजल्पितम् ॥

किं च शाकुन्तलीयचरमपद्यस्य तुलना चिद्गगनचन्द्रिकागतेन पद्येनैकेन कर्तव्या, यथा—

शाकुन्तले—ममाऽपि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः।

चिद्गगनचन्द्रिकायाम्—अञ्जनेन रुचिमिश्रणे समे
रक्तमुल्लसति तावकं वपुः ।

श्यामनीलतनुताञ्जनेऽधिके
पीनशुक्लतनुता च ते रुचौ ॥

अत्र नीललोहितपदं किमपि साम्प्रदायिकं तत्त्वं सूचयति इति वक्तुं सुशकम्। यतोऽत्र सम्प्रदाये नीलो वर्णः अपराशक्तेः, रक्तः परापरायाः, शुक्लश्च पराया इत्यस्ति समुल्लेखः। यदुक्तं तन्त्रालोके—

**परा चन्द्रसमप्रख्या रक्ता देवी परापरा।**
**अपरा सा परा काली भीषणा चण्डयोगिनी ॥ इति**

अस्याश्चिद्गगनचन्द्रिकाया उद्धरणानि योगिनीहृदयग्रन्थस्य टीकायां अमृतानन्दनाथेन, महार्थमञ्जर्यां महेश्वरानन्देन, आनन्दलहरीटीकायां कैवल्याश्रमेण, सौभाग्यभास्करटीकायां श्रीभास्कररायदीक्षितैश्च प्रमाणत्वेन परिगृहीतानि प्रकाशन्ते।

तत्र अमृतानन्दनाथः सर्वेषु प्राचीनः कामकलाविलासाख्यग्रंथकर्तुः पुण्यानन्दनाथस्य शिष्य इति तदुक्त्यैव निर्णीतम्। कामकलाविलासः सुतरां प्राचीन इत्यत्र न विवादः। यद्यपि तस्य स्पष्टतया कालनिर्णयः केनाऽपि न कृतः। आर्थरएवलेन महोदयेन ग्रन्थस्यास्य अनुवादः पूर्वनिर्दिष्टतांत्रिकटेक्स्ट ग्रन्थमालायां प्रकाशितः समुपलभ्यते। मुद्रणादि-विषये यद्वृत्तं तत्सम्पादकमहोदयाभ्यां भूमिकायां निर्दिष्टं तत एव द्रष्टव्यम्।

यत्तु सिद्धनाथकृतस्तुतेरेव विवरणात्मिका स्तुतिरेषा कालिदासस्य, सिद्धनाथश्च शम्भुनाथाऽपरनामधेयः श्रीमदभिनवगुप्तपादाचार्याणां गुरुः, ततश्च कालिदासोऽयमर्वाचीन इति केचित्कथयन्ति तदपि संदिग्धमेव।

सिद्धनाथपदस्य व्यक्तिविशेषवाचकत्वेऽपि पृथगपि कश्चित् कालिदाससम्बन्धी सिद्धनाथो महापुरुषो भवितुमर्हति।

मालविकाग्निमित्रचतुर्थपादग्रहणं स्वकीयतया नाऽऽक्षेपयोग्यं भवेत्, कालिदासेन रघुवंशकुमारसम्भवयोर्वरयात्रा प्रसंगे पौरसुन्दरीणां विभ्रमकुतूहल-

पराणि प्रायः समानाकाराणि पद्यान्युपन्यस्तानि। स्वतन्त्रस्य कवेः स्वरचना-विषये यतस्ततो निक्षेपो न खलु दूषणमावहेत।

एतत्प्रतिपक्षतया सम्भावनागोचरा अपि तर्काः सम्भवन्ति—प्रसिद्धेषु कालिदास-प्रबन्धेषु भगवतो गणेशस्य नामकीर्तनमपि नाऽस्ति, रघुवंशे पुत्रकामनया वशिष्ठाश्रमं प्रति प्रस्थानावसरे दिलीपस्य विधातुः पूजा सूचिता कविना, यथा—

**अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया।**
**तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम्॥ इति।**

कालिदासस्य समये स्कन्दपूजाया एव सविशेषं प्रचार आसीदित्यनुमीयते। तस्मिन् समये गणेशपूजायाः कीदृशं स्थानमभूदित्ययं विचारकाणां विमर्शमपेक्षते विषयः।

श्यामलादण्डक-नवरत्नमाला-प्रभृतिस्तोत्राणामपि कर्तृतया कलिदासस्य प्रसिद्धिरस्ति, सा श्यामला मातंगी नाम देवता, दशमहाविद्यास्वन्यतमा ख्याप्यते। तस्या अपि कालीति नाम्ना निर्देशः श्रीशङ्कराचार्यकृतायामश्वघाटीस्तुतौ विहितो दृश्यते, यथा—

**सालीकरोतु मम कालीमनः स्वपदनालीकसेवनविधौ। इति**

तदुपासकतयाऽपि कालिदासनाम्ना प्रसिद्धिः सम्भवति महाकवेः। विद्वत्परम्परायां कालिदासः श्यामलादेव्या उपासक इति प्रसिद्धिर्मयाऽपि विश्वसनीयप्राचीनपण्डितेभ्यः कर्णगोचरीकृतास्ति।

यत् किमपि भवेन्नाम, चिद्गगनचन्द्रिकायामुपवर्णितो विषयः सारगर्भो गभीरः शास्त्रीयश्च वर्तते। तस्य परम्परा काश्मीरेषु दक्षिणभारते च समुपलभ्यते, महाकविः कालिदासस्तावत् असाधारणप्रतिभाभूमिर्महान् साधकश्च आसीदितिकथने न संशयस्याऽवसरः। ऐतिहासिकी दृष्टिस्तुस्फुटं प्रमाणमपेक्षते, तदत्र वस्तुनि विशिष्टविदुषामवधानं प्रार्थये, इति।

# मर्मस्पर्शिव्यंग्यकारो महाकविरकबरः

विद्याभूषणः
श्री गणेशराम शर्मा

( गताङ्कादग्रे )

## कवेरस्यसर्वधर्मसमभावः

कविवरोऽसावकबरः सर्वधर्मेषु समभावं, समदर्शितां च धत्ते स्म तेन क्वचिदुक्तं स्वकाव्ये—

"आता है वाद मुझको, हर दीन की अदा पर।
गिरजें में नाचता हूँ, नाकूस की सदा पर॥"

सर्वेऽपि वयं जानीमो यदस्य कवेर्जन्मस्थलं प्रयागनगरमासीदिति। प्रयागस्तावद्धिन्दूनां न केवलं तीर्थस्थलमेवापितु तीर्थराजस्त्रिवेणीसङ्गमो महान् वर्तते, तत्र च महामनाः पं० मदनमोहनमालवीयमहाभागस्तथा पं० श्री जवाहरलालनेहरुसदृशा महापुरुषाश्चऽन्ववसन्। तदानीं देशेऽआंग्लशासकानां कूटनीतेर्हिन्दुमुस्लिमजात्योर्मिथः साम्प्रदायिकाः सङ्घर्षाः प्रायेण जायमाना आसन्। 'माभूदेकस्यैव देशवासिनोर्हिन्दुमुस्लिमयोः परस्परं धर्मसम्प्रदायगतः कलहः, संघर्षश्च इति कृत्वा कविरसौ द्वयोर्जात्योर्मेलप्रीति-मधुर-व्यवहार-साधकान्यनेकानि पद्यानि लिलेख। तेषु कानिचिदत्र वर्णिकारूपाण्यवलोक्यन्ताम्—

"हिन्दु औ मुस्लिम एक हैं दोनों, यानी यह दोनों एशियाई हैं।
हम वतन, हम ज़ुबाँ, व हम किस्मत, क्यों न कहदूं कि भाई भाई हैं॥"

पुनश्च

"कहता हूँ हिन्दु औ' मुसलमाँ से यही
अपनी-अपनी रविश पै नेक रहो।
लाठी है हवायें-दह्, पानी बन जाओ,
मौजों की तरह लड़ो, मगर एक रहो॥"

अन्यतोध—

"इनायत मुझ पे फरमाते हैं शेखो-बिरहमन दोनों,
मुवाफिक अपने-अपने पाते हैं मेरा चलन दोनों।
तराने मेरे हम आहंग, देरो-काबा हैं एक सम,
जुबाँ पर मेरी मौजूं होते हैं हम्दो भजन दोनों"

पुनरपि—

"बेहतर यही है फेरले आँखों को गाय से,
क्या फायदा है रोज की इस हाय हाय से !
"कमजोरियों को रोक दे, जोरों का क्या करे ?
मुस्लिम हटें तो फौज के गोरों का क्या करे ?
मुँह बन्द हो सकेगा मुसलमां शरीफ का।
चस्का मगर क्यों जायगा साहब के बीफ का ?"

अपरं च—

"लड़ें क्यों हिन्दुओं से हम ? यहां के अन से पनपे हैं,
हमारी भी दोआ यह है कि गंगाजी की बढ़ती हो।
मगर हाँ शेख जी की पालसी से हम नहीं वाकिफ,
इसी पर खत्म करते हैं कि जो साहब की मर्जी हो॥"

अन्यदपि च—

"योरप वाले जो चाहें कर दें,
जिसके सर जो चाहें तोहमत धर दें।
बचते रहो इनकी तेजियों से 'अकबर'
तुम क्या हो ? खुदा के भी तीन टुकड़े कर दें॥"

तथा च—

"चुगलियाँ एक दूसरे की वक्त पर जड़ते भी हैं,
नागहाँ गुस्सा जो आ जाता है लड़ पड़ते भी हैं।
हिन्दु औ' मुस्लिम हैं फिर भी एक, औ' कहते हैं सच,
हैं नजर आपस की हम, लड़ते भी हैं, मिलते भी हैं॥"

हिन्दु-मोहम्मदीयाना परस्परं विवर्द्धमानं मतभेदं तत्कालीनं साम्प्रदायिकं कलह-क्लेश-बाहुल्यं च दृष्टवास्य कवेरकबरस्य मनसि महानेव क्षोभो बभूव। तद्भावमेव स्वकाव्येऽभिव्यञ्जयन् स आह—

"वह लुत्फ अब हिन्दू औ' मुसलमाँ में कहाँ?
अगयार गुजरते हैं इन पै खन्दा जना।
झगड़ा कभी गायका, जुबाँ की कभी बहस;
है सख्त मुजिर यह नुस्खरा—गावजबाँ॥"

अन्यदपि—

"मैं देखता हूँ सुलहो-मुहुब्बत है उठ गई,
हर दिल से, हर गरोह से, हर खानदान से।
इसका सबब नहीं है सिवा इसके और कुछ,
यानी की उठ गया है खुदा दरमियान से॥"

## अकबरस्य महाकवेः पत्रकारितां प्रति दृष्टिकोणः

"खींचो न कमानों को, न तलवार निकालो।
जब तोप मुकाबिल हो, तो अखबार निकालो॥"

पत्रपत्रिकादीनां सम्पादनं, तत्प्रकाशनं च कियत् कठिनं भवति तत् प्रति सङ्केतं कुर्वाणेन कविनोक्तम्—'पत्र प्रकाशनं खड्गधारायास्तथा धनुःसन्धानादपि च दुष्करं कर्म भवति। विज्ञानराजनीतिसंघर्षप्रधानेऽस्मिन् युगे पत्रकारित्वं

बताऽग्नेयास्त्रैः संघर्ष इव भवति । सुनिपुणं विचार्यैवास्मिन् पथि पदं निधातव्य-मिति कवेरभिप्रायः ।'

कवेरस्य जीवनकालेऽनेकानि मासिक-पाक्षिक-साप्ताहिक-दैनिक-पत्राणि प्रचकाशिरे, परन्तु तानि सर्वाणि द्रव्याभावादध्यवसायान्नैपुण्यं विना चाल्पायूंषि भूत्वातिरोदधिरे । तमिमं विषयमधिकृत्य तेन लिखितम्—

"ले ले कलम के लोग भाले निकले,
हर सिम्त से बीसियों रिसाले निकले।
अफसोस कि मुफलिसी ने छापा मारा,
आखिर अहबाब के दिवाले निकले ॥"

अत्र पद्ये 'छापामारा' इत्यत्र श्लेषोऽतीव मनोरमः । अद्यापि चाल्पधनानां, साधनसम्पद्विरहितानां, योग्यता-चातुर्य-कर्मण्यतादिहीनानामारम्भशूराणां पत्रसम्पादकानां, तत्प्रकाशकानांच पक्षे कवेरियमुक्तिः कीदृक् सर्वात्मना सटीकं घटत इति प्रत्यक्षमेवास्माकम् । अनेन कवेरस्य यथार्थवादित्वं, क्रान्तदर्शित्वं, जागतिकानुभवप्रवणत्वं च सुस्पष्टमेव ज्ञायते नाम नूनम् ।

अथाधुनातनांल्लेखान् ये सम्पादकाःप्रकाशकाश्चापवञ्चयन्ति, लेखकेभ्यः पारिश्रमिकं, पुरस्कारं वा न प्रयच्छन्ति, केवलं तेषां शोषणमेव कुर्वन्ति तान् प्रति कविराह—

उन्हीं के मतलब की कह रहा हूँ, जबान मेरी है बात उनकी।
उन्हीं की महफिल सँवारताहूँ, चिराग मेरा है रात उनकी ॥
फकत मेरा हाथ चल रहा है, उन्हीं का मतलब निकल रहा है।
उन्हीं का मजमूँ, उन्हीं का कागज, कलम उन्हीं की दवात उनकी ॥"

अथ काव्यरचनासु भाषायाःप्रयोगविषयेऽस्य महाकवेः स्वकीयो मौलिको दृष्टिकोणःसिद्धान्तश्चाभूत् । स खलुभावाऽभिव्यक्तौ प्रतिभोत्कर्षं, व्यङ्ग्यशबलां शैलीमेव हि काव्यस्यात्मानं मेने । भाषाविवादं स व्यर्थं मन्यते स्म । विषयेऽत्र सः कथयति—

"दिल छोड़ के जबान के पहलू पै आ पड़े।
हम लोग शायरी से बहुत दूर जा पड़े॥
मानी को छोड़ कर जो हों नाजुक बयानियाँ,
वह शेर क्या है, रङ्ग है लफ्जों के खून का॥

अपरं च —

"मैं अपने आपमें इन शायरों में फर्क करता हूँ।
सखुन इनसे सँवरता है सखुन से मैं सँवरता हूँ॥

अर्थात् वयमधुनातनाः कवयो भाषां त्वतीवाडम्बरपूर्णां काव्यरचनासु प्रयुञ्जामः परन्त्वर्थगाम्भीर्यं, भावप्रकाशने मर्मस्पर्शितां, सुस्फीतां शैलीमभिव्यञ्जनाप्रधानामुपेक्षामहे। भाषाविवादः शब्दाडम्बरश्चापहार्यं इति कवेः सुस्पष्टोऽभिप्रायः।

"कहाँ उर्दू-वो हिन्दी में जरे-नकद,वही अच्छा जो गिनता मनी है।
मेरे नजदीक तो बेसूद ये बहस, मियां हमदम! वो चिन्तामनी है!"

अत्र कवेर्हिन्दी-उर्दूभाषापेक्षया आंग्लभाषैव चिन्तामणिरिव सर्वार्थसिद्धिप्रदेति व्यङ्ग्यमेकम्। यतस्तदानीं बतांग्लानां प्रभुत्वे गौराङ्गाणां प्रभावादत्र भारते सर्वत्रांग्लभाषाया एवादरो महानभूदित्युक्तं कविना। अपरं च व्यङ्ग्यमेकमतिनिगूढं कविनात्र पद्ये प्रोक्तम्। तथाहि—तदानीं प्रयागतः समर्थस्य पत्रकारस्य सी० वी० चिन्तामणिमहाभागस्य सम्पादकत्वे खल्वांग्लभाषाया 'लीडर' इत्याख्यं समाचारपत्रं महता साफल्येन प्रकाशं गच्छति स्म, तस्य च प्रचारो महान् व्यापकश्चासीत्। तस्मिन्नेव समये 'हमदम' इति नामकमेकमुर्दूभाषायाः पत्रमपि प्राकाश्यं व्रजति स्म। परन्त्वांग्लभाषायाः साम्राज्ये हमदम-पत्रं क्षीणक्षीणं म्रियमाणं विरलप्रचारं नाधिकं साफल्यमवाप, ततः कविनात्र 'चिन्तामणि-हमदम' इत्यनयोर्द्वयोः शब्दयोः प्रयोगं विदधता सम्सामयिकमुदाहरणमपि परिहासभङ्ग्यातीवमार्मिकत्वेनोक्तमिति धन्यास्य कवेः प्रौढिश्चित्रम्यत्वं व्यङ्ग्यपाटवमिति किं विशेषेण वक्तव्यमपेक्षते सहृदयानां पाठकानां पुरतः।

अथ तदानीं महाकवेरस्याकबरस्य जीवनकाले भारतदेशेऽ च किलांग्लाः शासकाः स्वकीये शासनतन्त्रे विदुषामपेक्षया स्वकार्यालयोपयोगिनो लेखकानेवाधिकाधिकं कृपापात्रत्वेन कामयन्ते स्म । भारतीयाश्चाप्यबोधाः । 'क्लर्कत्वं' बत महोच्चपदं महान्तमधिकारमिव मन्यमाना आसन् । तामिमां मनोवृत्तिमाक्षिपन् कविब्रूते—

"छोड़ लिटरेचर को अपने, हिस्टरी को भूल जा;
शेख़ो-मस्जिद से तअल्लुक तर्क करके स्कूल जा।
चार दिन की ज़िन्दगी में कोफ्त से क्या फ़ायदा?
खा डबल रोटी किलर्की कर खुशी से फूल जा!"

अत्र भृत्यतामात्रैकध्येयानां भारतीयानां तथाकथितशिक्षितानां हीनां मनोवृत्ति कियता मार्मिकेण प्रकारेणाकबरो वर्णयामासेति सहृदया एव प्रमाणम् ।

## अधुनातना नेतारोऽकबरश्च

"लीडरों की धूम है और फॉलोअर कोई नहीं।
सब तो जनरल हैं यहाँ, आख़िर सिपाही कौन है?"

नेतृणां बाहुल्यमत्र देशे शिरोवेदनातुल्यमेव । सर्वेऽपि च नेतृपदवाच्या जनाः स्वात्मानं वरिष्ठं नेतारमेवोद्घोषयन्ति । ततः प्रजानां सेवां को नु बत विदधातु?

"क़ौम के ग़म में डिनर खाते हैं हुक्काम के साथ।
लीडर को ग़म बहुत है पर आराम के साथ!"

यत्र तत्र सर्वत्र निर्लक्ष्यं बम्भ्रम्यमाणा नेतारो ये भाषणान्येव वितरन्ति, महाभोजेष्वानन्दोत्सवान् भुञ्जते, प्रजाजनानां धनं, समयं, शक्तिं चापव्ययन्ति तान् प्रति कवेरियमुक्तिः सर्वांशतो घटते, तेषां चारित्र्यदौर्बल्यं, कर्त्तव्यचेतनाराहित्यं, सेवाभावस्याभावं च प्रकटयति ।

अथाधुनोदरम्भराणां स्वार्थैकनिपुणानाम् दुर्नेतॄणां मानसीं दुष्प्रवृत्ति वर्णयन् कविर्वदति—

"कोई साहब न हों लिल्लाह नाख़ुश सुन के यह मिसरा;
ख़याले-हुब्बे कौमी पीछे और फ़िक्रे-शिकम पहले!"

ऐच्छ शुल्क (चन्दा)—भक्षणपरान् प्रजानां धनापहरणैकव्यवसायान्नेतॄन् विनिन्दन् कविः कथयति—

"सर्विस में मैं दाख़िल नहीं हूँ कौम का ख़ादिम;
चन्दे की फ़क़त आस है, तनख्वाह कहाँ है?"

अथ कृत्रिमान्नेतॄन् प्रति कविरकबरो वक्ति—

"वो रोये बहुत स्पीचों में, हिकमत इसको कहते हैं।
मैं समझा ख़ैरख्वाह उनको हिमाक़त इसको कहते हैं!"

अथ च वाक्-शूरान् नेतॄन् प्रति कविः कथयति—

"हो दिसम्बर में मुबारिक यह उछल-कूद आपको,
खून मुझमें भी है लेकिन् मुझको फाग न चाहिए॥"

कियद्वा वयमत्र महाकवेः काव्योद्धरणान्यवतारयेम? स खलु परमात्म-सृष्टि-जीवसम्बद्धेषु, राजनीतिकेषु, सामाजिकेषु सर्वेष्वपि च विषयेषु स्वरचनाश्चकार।

## कवेरात्मविश्वासः स्वाभिमानश्च

स एष महाकविरकबरः स्वप्रतिभाविषयेऽतीवात्मविश्वाससम्पन्नः स्वाभिमानगौरववांश्चासीत्। विषयेऽत्र प्रसक्तानुप्रसक्तं काश्चन सूक्तीर्वयमुद्धरामो याभिस्तस्य स्वात्मविश्वासस्य स्वाभिमानस्य च परिचयः स्यात्—

"अगर ढूँढ़ो तो 'अकबर' में भी पाओगे हुनर कोई;
अगर चाहो निकालो ऐब तुम अच्छे से अच्छे में॥"

पुनः —

"जो 'अकबर' ने महफिल में खोली जुबाँ,
गुलिस्ताँ में बुलबुल चहकने लगा ।।"

अपरं च—

"करेगा कद्र जो दुनियाँ में अपने आने की ।
उसी की जान को लज्जत मिलेगी जाने की ।।"

अन्यदपि—

"हुजूमे-बुलबुल हुआ चमन में, किया जो गुल ने जमाल पैदा ।
कमी नहीं कद्रदाँ की 'अकबर' करे तो कोई कमाल पैदा ।।"

पुनश्च—

"तुझे हम शायरों में क्यों न 'अकबर' मुन्तखब समझें ?
बयाँ ऐसा कि दिल माने, जुबाँ ऐसी कि सब समझें ।।"

अथाधुना वयमत्राकबरस्य महाकवेर्विनोदगर्भिताः काश्चन सूक्तीः पाठकानां पुरोऽवताय लेखमिममुपसंहर्तुं वाञ्छामः । कविरसावत्यन्तं भावुकमना रसिक-हृदयो मार्मिको विनोदप्रियश्च बभूव । प्राप्तावसरं सहासपरिहासोपहासकरणे न कमपि क्षमयामास । उपहासव्यङ्ग्योक्तिसाधने सोऽतीव पटीयानभूदिति निम्नांकितैः कैश्चित्काव्यसूक्तैः सुस्पष्टं भवेत् पाठकमहाभागानाम्—

"इधर तसबीह की गरदिश में पाया शेख साहब को;
बिरहमन को उधर उलझा हुआ जुन्नार में देखा ।
मगर इश्के-हकीकी का कोई रिश्ता न था दिल में;
फकत नफसानियत का पेचो-खमहर तार में देखा ।।"

"उश्शाक को भी माले-तिजारत समझ लिया;
इस कद्र को मुलाहजा लिल्लाह कीजिए !
भरते हैं मेरी आह को फोनोगराफ में;
कहते हैं फीस लीजिए और आह कीजिए ।।"

इससे तो इस सदी में नहीं हमको कुछ गरज;
सुकरात बोले क्या व अरस्तूने क्या कहा।
बहरे-खुदा जनाब दें हमको इत्तला;
साहब का क्या जवाब था बाबूने क्या कहा ?"

अद्यत्वे पाश्चात्त्यसभ्यतामनुसरन्तो भारतीयाश्चापि प्रतिदिनं श्मश्रुमुण्डनं कुर्वन्ति, तद्विषये कविरयमुपहासभङ्ग्या वदति—

"कर दिया करज़न ने ज़न मरदों की सूरत देखिये;
आबरू चेहरे की सब फ़ैशन बताकर पूँछ ली।
सच ये है इन्सान को यूरप ने हलका कर दिया;
इब्तदा दाढ़ी से की और इन्तहा में मूँछ ली॥"

अपरं च—

"दाढ़ी ख़ुदा का नूर है बेशक मगर जनाब;
फ़ैशन के इन्तज़ामें-सफाई को क्या करूँ ?

पुनश्च—

"देख अब्दुल गफूर की तरफ़,
मर्द खुशहाल इसको कहते हैं।
चार अबरू का है सफाया,
फारिग-उल-बार इसको कहते हैं॥"

इत्थं वयं पश्यामो यदसौ महाकविरकबर-महाशयः स्वकाव्य-रचनासु वर्तमानविश्वस्य सर्वेष्वपि विषयेषु लेखनीं व्यापारयामास।

(अग्रिमाङ्के समाप्यः)

# विहरति पुररिपुरिह मधुमासे

कविः
श्री रामजित् भट्टः

सरसरसालकुसुममञ्जरिकामधुपिञ्जरितदिगन्ते,
स्मरसृणि किंशुकलग्नविरहिजनकालखण्डनिभवृन्ते । १

विहरति पुररिपुरिह मधुमासे ।
रमयति सुररमणीरधिकं प्रतितरुकृतकुसुमविकासे ॥
(ध्रुवपदम्)

सरसिजपत्रनिहितमदनाऽक्षरनिकरोपमितमिलिन्दे ।
कुण्ठितयुवतीहठकलकण्ठरवाऽहितहितयुववृन्दे ॥२
विहरति०

कुसुमशरस्मिततुल्यमल्लिका सक्षणदक्षिणवाते ।
विपिनसमृद्धितिलकतिलकद्रुमसूनजनितजनशाते ॥
विहरति०

अलिपतहिमकल्पितजनशर्मणि सरसीलसदरविन्दे ।
लोकितरजनिविशोकितकोकविलोकितपरमाऽऽनन्दे ॥ ४
विहरति०

विरहिक्रकचायितकेतकमुखकृतबहुरजोनिधाने ।
अरुणाऽशोककुसुममयमदनज्वलदनलाऽस्त्रविताने ॥ ५
विहरति०

फुल्लतमालनिवहतिमिरापहकृतकुरुबकसुमदोपे ।
केशरबकुलगन्धबन्धुरेह्लीनतविकुसुमनीपे ॥ ६
विहरति०

ललनागलवलयितभुजमुन्मदमदनभ्रमितभुजङ्गे ।
दुस्सहविरहदहनविनिपातितपृथुतरपथिकपतङ्गे ॥ ७
विहरति०

श्रीकविरामकथितमधुमाधवसमयसदृशवनरूपम् ।
शमयतु कलिशमलं सुरपरिवृढवरदरतेरनुरूपम् ॥ ८
विहरति०

( अप्रकाशित—गीतगिरीशकाव्यात् )

---

# शालिकवेः पाण्डित्यम्

श्रीकुन्दनलाल जैनः
एम्० ए०, साहित्यशास्त्री

आगमिकपण्डितशालिकविः कदा कं देशमलञ्चकार इति न ज्ञायते किञ्चिदपि। तस्य जीवनपरिचयस्तथा जीवनवैशिष्ट्यमपि न कुत्राऽपि लभ्यते। परं तस्य व्याकरणवैदग्ध्यं काव्यचमत्कृतिञ्च दृष्ट्वा विद्वज्जना नूनं विस्मिता भवन्ति। अत्र प्रस्तूयते कविनिर्मिता नेमिस्तुतिः। या केवलं नेमिप्रभोः नामाङ्कितवर्णयोः (न, म) एव रचिताऽस्ति।

नेमिप्रभुः जैनानां चतुर्विंशतितीर्थङ्करेषु द्वाविंशतितमः तीर्थङ्करोऽस्ति। नेमिप्रभोः राजमत्याश्चोत्सर्गस्य त्यागस्य च गौरवगाथा जैनवाङ्मये प्राचुर्येणोपलभ्यते। अनेके विद्वांसः कवयश्च तावधिकृत्य विपुलं साहित्यं विभिन्नभाषासु रचितवन्तः। तेषु साहित्यनिधिषु एकः शालिकविकृतः साहित्यमणिरत्र प्रस्तूयते। अस्याः स्तुतेः मूलपाण्डुलिपिः इन्द्रप्रस्थनगरस्थित—"जैनपंचायती मंदिरस्य" सरस्वती सदने स्थिताऽस्ति। इयं स्तुतिः अष्टसु श्लोकेषु रचिताऽस्ति, परं तेषामर्थस्यासुगमत्वात् कविमहोदयेन तेषां श्लोकानां संस्कृतव्याख्याऽपि स्वयमेव कृताऽऽसीत्। साप्यत्र दीयते। आशासे यज्जैनकवीनां वैदग्ध्यस्य, पाण्डित्यस्य, साहित्यसेवायाश्च निष्पक्षरूपेणोचितमूल्याङ्कनं कृत्वा विद्वद्भिः संस्कृतसाहित्यस्येतिहासे तेषां समुचितस्थानं निर्धारयिष्यन्ति। ईदृशी एव

एकाऽन्याकृतिः "प्रबोधसारः" इति नाम्नाप्रथिताऽस्ति, या यशःकीर्तिमहोद-येन कतिपय सुनिश्चित-व्यञ्जनवर्णैरेव रचिताऽस्ति । तस्याः परिचयोऽन्यदा दास्यते ।

## नेमिस्तुतिः

मानेनाऽनूनमानेन नोन्नमुन्नामिमाननं ।
नेमिनामानममम मुनीनामिनमानुमः ॥१॥

व्याख्या—आनुमः = स्तुमः, के कर्त्तारो वयं, कं कर्मतापन्नं, मुनी-नामिन = मुनीन्द्रं, किमभिधानं, नेमिनामानं, किंविशिष्टम्, उन्दी क्लेदने इत्यस्य धातोः प्रयोजनं न उन्नं न विलन्नं न क्लान्तमित्यर्थः, केन मानेन = अहंकारेण किंविशिष्टेन, अनूनमानेन = अत्युच्चप्रमाणेन, पुनः किंविशिष्टम्, उन्नामिमाननं = उन्नामिनी उत्सर्पिणी मानना पूजा यस्य सः तथा त, पुनः किंविशिष्टम्, अमम = निर्ममित्यर्थः ॥१॥

नानामानामनिम्नानाममानानामनामिना—
मनामिनेऽनामिनामोमे नेमिनाम्ने नमो नमः ॥२॥

व्याख्या—नमोनमः = नमस्कारोऽस्तु प्रकर्षेण वीप्सायां द्वित्वं, कस्मै, नेमिनाम्ने = नेमिस्वाम्यभिधाय, किंविशिष्टाय, अनामिने = इत्यस्तज्वरणशीलाय, केषां, नानामानां = नानाविधा आमा = व्याधयस्तेषाम् किंविशिष्टानाम्, अनिम्ना-नाम् = उत्कटानां, पुनः किंविशिष्टानाम्, अमानानाम्, अप्रमाणानां, पुनः किंविशिष्टानाम्, अनामिनाम् = नामयितुमशक्यानां, पुनः किंविशिष्टाय, नेमिनाम्ने ओमे = रक्षकाय अव रक्षणे इत्यस्य धातोः, केषां, नामिनां = प्रणमता-मित्यर्थः ।२।

माने नोन्नामिनं नाम नौनानिम्न-ममानने ।
ननु नेमिममीमेनामोमानामानमन्निनाः ॥३॥

व्याख्या—आनमन् = नमस्कुर्वन्ति स्म, के कर्त्तारोऽमी इनाः = स्वामिनः, कं नेमिं, नन्वित्याक्षेपे का नामिनाः मेनामोमानां = मेना मेनकाख्या 'अप्सरसः, मा = लक्ष्मीः, उमा = गौरी, तां पुरंदर श्रीधर शंकर इति भावः, किंविशिष्टं नेमि न उन्नामिनं = न उत्सिक्तं क्व, माने = पूजायामनतिप्रकाश्ये पुनरपि किं ननु अनिम्नं अपितु अनिम्नमेव = अदीनमेव क्वऽमानने = अपूजायामित्यर्थः ।३।

मिन्नमन्मनमा मानि मानन्नीमाननोन्मनाः ।
ना नानामीमनन्नेमिं मनोममिममानिनां ॥४॥

व्याख्या—ना = पुरुषो नाना प्रकारम् अमीमनत = मानयामास पूजयामास कं कर्मतापन्नम् इमं नेमिं किंविशिष्टं मनोमम्-अमद्रुममहृमम गता वित्यस्य धातोः मनः कर्मतापन्नं, अमति = गच्छति, हृदयवर्तिनां केषाम् आनिनां = आनाः = प्राणाः विद्यन्ते येषां ते तथा तेषां ना किंविशिष्टः मिन्नेत्यादि पूर्वार्द्धे मां = लक्ष्मीम् आत्मानं मन्यन्ते मामान्यः ततश्च मिन्नानां = स्निग्धानां मन्मनानाम् अव्यक्तानां लयपर्यन्तानां मा मानि माननीनां = मनस्विनां माननं = अणुव्रतं तत्र उन्मनाः = उत्कण्ठित इत्यर्थः "उत्कण्ठोत्सुक उन्मनाः" इति हैमकोषः ।४।

मनोमुन्निमनं नूनमुन्नन्नमन्माननोननं ।
नुन्नमेनोऽमुना नेमिनाम्नाम्नानेन मामनु ॥५॥

व्याख्या--णुद प्रेरणे इत्यस्य धातोः प्रयोगः, नुन्नं = क्षिप्तं किं तत् एनः = पापं, केनामुना नेमिना, किं कृत्वा आम्नानेन = आम्नानम् = अभ्यसनं पुनरुच्चारणं तेन, कथम् अनु = लक्ष्यीकृत्य, कं माम् एनः किंविधं मनोमुन्निम्नमन् = मनसो मुद्धर्षस्तं निम्नयति अल्पीकरोति पुनः किम् उन्नमन्माननोननम् = उन्नमन्ती उत्सर्पन्ती मानना = पूजा ताम् ऊनयति न्यूनयतीत्यर्थः । एनः = पाप्मा च पातकमिति हैमः ।५।

नोनमुन्मानमानेन मुनीनानेममाननं ।
मीनानमिन्नमन्नेमिमनूनां नामिमीममां ॥६॥

व्याख्या—ना = पुरुषो मीमृ गतावित्यस्य धातोः मिमीम = जगाम प्राप कां मां = लक्ष्मीं, किंविशिष्टाम् अनूनां = परिपूर्णां; किं कुर्वन् नमन् = नमस्कुर्वन्, कं नेमिं किं न ऊनं = न रहितं, केन उन्मानमानेन = "जलदोणमद्धभारं समूहाऊ समूहसिउउ अजोणवर उमणं माण प्रमाणंञ्च भणियं जिणवरि देहि" इति वचनात् प्रमाण-विशेषेण, पुनः किंविशिष्टं मुनीनानेममाननं = मुनीनां सप्तर्षीणामिनः = स्वामी चन्द्रवदनेमा = अखंडमा = लक्ष्मीः यस्य तत् एवंविधमाननं = मुखं यस्य तं मुनीनानेममाननं मीङ् हिंसायामित्यस्य धातोः मीनानं = हिंसन्तं, कं मिं काममित्यर्थः ।६।

मुनीनमेनोमीनानां निमाने नेमिमाननम् ।
नेमिनामानमानानाममोमानममुं नुमः ॥७॥

व्याख्या—अमुं नेमिनामानं मुनीनं नुमः = नमस्कुर्मः इति सम्बन्धः तथा एनांसि = कल्मषाण्येव मीनाः = मत्स्यास्तेषां निमाने = हनने नेमिं = चक्रधुरामात्मानं मन्यते तम् एनोमीनानां निमाने नेमिमाननम् पुनः किम् अमोमं बन्धने इत्यस्य अमोमानम् = अबन्धकं, केषां नानानां = दशविधप्रमाणानाम् क्षीणकर्मकृत्वेत्यर्थः "मत्स्यो मीनः पृथुरोमा" इत्यभिधानचिन्तामणिः ।७।

नेमीनमननं नेमिनमनं नेमिमाननं ।
नेमिनाम्ने ननाम्नानमाना नूनममी मम ॥८॥

व्याख्या—नूनं = निश्चितम् "अवश्यं नूनं च निश्चये" इति हैमः । मम अमी आनाः = प्राणाः जीवितमिति तात्पर्यम्, यत्किं नेमीनस्य नेमिस्वामिनो मननं = स्मरणं नेमीनमननम् तथा नेमेर्नमनं नतिस्तं नेमिनमनं तथा नेमेर्माननं तथा द्वौ नवौ प्रकृत्यर्थं गमयत इति नेमिनाम्न आम्नानं पुनरभ्यसनमुत्कीर्तनमित्यर्थः ।८।

इति स्तुतिं ये पुरतः पठन्ति नेमेर्निजव्यञ्जनयुग्मसिद्धां ।
श्रीवर्द्धमानोदयशालिनस्ते स्युर्सिद्धिवध्वा परिभोगयोग्याः ॥९॥

इत्यस्य श्लोकस्यार्थंसुगमत्वान्नात्र लिखिता टीका । इति श्रीनेमिस्तुतितिलकं समाप्तमष्टकम् । इत्यागमिकपंडितशालिकविविरचितं द्व्यक्षरस्तवनं समाप्तम् ।

# होली-गीतम्

श्री प्रभात मिश्रः

अद्य मानिनि ! होलिका, होलिका रे ! होलिका ।

रङ्ग—कुङ्कुम—धूलि—भारा,
वहति हर्षोल्लास—धारा,
नृत्यन्ति बालाः बालिका,

अद्य मानिनि ! होलिका, होलिका रे ! होलिका ।

तरुण—जन-बन्धन—श्रेणीम्,
झटिति सज्जय निजां वेणीम्,
क्व गता ? त्वदीया चोलिका,

अद्य मानिनि ! होलिका, होलिका रे ! होलिका ।

कामदेव—कलम्ब—लेखा,
चंचलेयं भ्रुवोरेखा,
मृग—वधोरपि मोहिका,

अद्य मानिनि ! होलिका, होलिका रे ! होलिका ।

उचिता न मानिनि ! रोषरीति-
र्गीयतां सा प्रीति—गीति-
र्या प्रस्तर—स्तर—दोलिका,

अद्य मानिनि ! होलिका, होलिका रे ! होलिका ।

# व्यंग्य-विनोदाः

प्राक्तनकवयः

न प्राप्नुवन्ति यतयो रुदितेन मोक्षं
स्वर्गायतिं न परिहासकथा रुणद्धि।
तस्मात्प्रतीतमनसा हसितव्यमेव
वृत्तिं बुधेन खलु कौरुकुचीं विहाय॥

—श्यामलिकस्य

ये कामिनीं गुणवतीञ्च सयौवनाञ्च
नारीं नराः प्रणयिनीञ्च विमानयन्ति।
ते भोः कृषीवलवचःपरिदग्धचित्तै—
र्गोभिः समं पृथुमुखेषु हलेषु योज्याः॥

—ईश्वरदत्तस्य

सत्कोणं लोलनेत्रं कुलयुवतिमुखं दृश्यते सानुकम्पै-
रस्नानामर्धलज्जाञ्चितिमधिपुलकं स्पृश्यते पीनमङ्गम्।
क्लीबानां खाद्यतेऽन्तश्चिरविहितधनं काष्ठमूलाग्नितोयैः
पूर्वं विद्याकलानां सकलसुखनिधिर्वैद्यविद्याभिवन्द्या॥

—दीपकस्य

पितरि मृतेऽपि हि वेश्या रोदिति हा तात तात तातेति ।
उपभुक्तखदिरवीटिका–जनिताधररंगभंग—भयात् ॥
—उच्छठस्य

यज्ञोपवीतं परमं पवित्रं करेण धृत्वा शपथं करोमि ।
नान्यन्मनोहारि नितम्बिनीभ्यो दुःखैकहेतुर्न च कश्चिदस्ति ॥
—कस्यापि

प्रश्नाः कथा विचित्राः कण्डूयनमंशुकान्तराकृष्टिः ।
दिनवेलार्कनिरीक्षणमतिहासो मशकदंशकाक्षेपः ॥
बहिरपि गमनं बहुशः स्वजनकलिः सलिलपात्रभंगश्च ।
वाह्निःप्रशमश्चेति द्वादश चेष्टाः सुवर्णकाराणाम् ॥
—क्षेमेन्द्रस्य

ताम्बूलं कुसुमस्रजो मृगमदोन्मिश्रञ्च गन्धद्रवं
भक्त्याऽस्मै ददते पुराणपठनं शृण्वन्ति ये मानवाः ।
किञ्चायं विधवाः प्रलोभ्य युवतीर्ग्रन्थावसाने रहः
क्रीडामेव हि दक्षिणं विरचयन्गृह्णाति चेलाञ्चलम् ॥
—रामभद्रदीक्षितस्य

नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥
—कस्यापि

# ग्रन्थ-समीक्षा

सारस्वती सुषमा ( तन्त्राङ्कः )—सम्पादक :—आचार्य बलदेव उपाध्यायः । वाराणसेय संस्कृत विश्व-विद्यालय-पत्रिका, २० वर्षे १ अङ्कः । श्रावणपूर्णिमा संवत् २०२२ । पृष्ठ संख्या— ३०४ । वार्षिक मूल्यम्—रु० ७.०० ।

सारस्वतीसुषमायाः तन्त्रविशेषाङ्कोऽयं सर्वथा साधुप्रयासः, सम्पादित-सङ्कलितसंस्कृतवाङ्मये नूतनोपलब्धिश्च वर्तते । अङ्केऽस्मिन् एकोनत्रिंशत् निबन्धा भाषणानि च प्रकाशितानि सन्ति । येषु विशेषतया तन्त्रदर्शनं, तन्त्रसंस्कृतिं चाधिकृत्य कुण्डलिनीरहस्यं, जपचर्चां च समुद्दिश्य लेखकैः तन्त्रविषये विचारा उन्मीलिताः । एवमेतेषु लेखेषु तन्त्रस्य शास्त्रचर्चा एव वर्तते । प्रयोगपक्षात्मकमभ्यासविज्ञानमधिकृत्य न किमपि विवेचनं कृतं लेखकमहानुभावैः । तथापि अङ्कावलोकनेन किञ्चित् प्रकाशमायाति संस्कृत-वाङ्मयसमुद्रे निमग्नं रेखाकारं तन्त्रजगत्, तथा च तस्य पूर्णोद्धाराय आशावन्तो वयम् इदमपि बहु मन्यामहे ।

तन्त्रविद्या अभ्यासविद्या वर्तते । तस्या दार्शनिकपक्षपरव्याख्यानेनैव तस्या विलोपने साहाय्यं कृतम् इति पुरावृत्तमैतिह्यं तथ्यमस्ति । तथा च

सम्पादकमहोदयो यल्लिखितवान् सम्पादकीये "तान्त्रिकैः प्रयोगैर्योगाभ्यासेन चाणिमादिसिद्धीनामुपलब्धिः श्रूयते, किमत्र तत्त्वमिति रहस्यावृतमास्ते।" इति, तद्रहस्योद्घाटनमेव तात्त्विकरूपेण तन्त्रविद्याया उद्धारः। अधुना विज्ञानरूपेण प्रथिता विद्यैव पुरा शुक्राद्याचार्याणां तन्त्रविद्याऽऽसीत्। मन्त्र-विज्ञानम्, मन्त्रविज्ञानस्य साधको हठयोगः, हठयोगस्य प्राणभूता कुण्डलिनी एते विषयास्तु योग-साधन-भूतस्य तन्त्रविज्ञानस्य शब्दसिद्धिसाधनापरमात्रेणैव तन्त्रविद्यायाः परिशिष्टत्वेन समुपस्थाप्यन्ते। ज्योतिश्चिकित्साशिल्पादि-शास्त्रेषु सिद्धीभूता यन्त्रविद्या कालक्रमेण दर्शनोन्मुखीभूतात् तन्त्रात् विलुप्ता जाता। एवञ्च शब्दसिद्धिसाधनापरं तन्त्रविज्ञानमपि दार्शनिकचिन्तनेन प्रायोगिकपक्षशून्यमिदानीं वर्तते। मन्त्रतन्त्रसिद्धीनामाश्रयभूता दुर्गासप्तशती अपि सर्वथा नाद्य मूलरूपेण प्रकाशते। पुरा तान्त्रिकैः न सर्वे गुर्वपेक्षां विना मन्त्राणामुपयोगं कुर्युरिति वर्णविलोपनेन, अक्षर-विलोपनेन, विधि-विपर्ययेन च मन्त्रवाङ्मयस्य विघटनं कृतमासीत्। एवमेतेषां मन्त्रग्रन्थानां सम्यक् स्वरूपप्रकाशनाय श्रमोऽपेक्ष्यते। अयं श्रमश्च अध्ययनं समयं चापेक्षते। अतो वाराणसेयसंस्कृतविश्वविद्यालयस्य कर्णधारा यदि अस्य कृते अनु-शीलनात्मकं शोधसंस्थानं स्थापयितुं समर्था भवेयुस्तर्हि विलुप्तप्रायो भार-तीयविद्याया एको विशिष्टपक्षः पुनरुदेष्यति। अत्र इदमपि निवेदनीयं यत्-तन्त्रविद्यायामनेके पारङ्गताः सज्जनाः संस्कृतं सम्यक् न जानन्ति, किन्तु तेषां साहाय्यमन्तरा तन्त्रविद्यायाः समुद्धारो न भविष्यति। अतस्तेषां सहयोगो येन केनापि प्रकारेण वाञ्छनीय एव। एवमयं तन्त्राङ्कः तन्त्रविद्याविषयेऽनुशीलनाय प्रेरणासंवलितां भूमिकामेकां समुपस्थापयति।

—मिथ्याभेदी

# सहवर्ति साहित्यम्

श्रीशिवशङ्कर त्रिपाठी

संविद्—सम्पादकौ—जयन्तकृष्ण ह० दवे, आचार्य वेंकटेश्वर दीक्षितः
प्रकाशकः—सु० रामकृष्णन्, कार्यालयः—भारतीय विद्याभवनम्-मुम्बई-७।
वार्षिकशुल्कम्—४·००

इयं संस्कृत-त्रैमासिकी पत्रिका । द्वितीयवर्षस्य प्रथमद्वितीयसंयुक्ताङ्कोऽयम् । अस्मिन्नङ्के 'धर्मो धारयते प्रजाः,' 'पदपाठपरिशुद्धिः,' 'मेघदूतकाव्य-सौन्दर्यम्,' 'युद्ध्यस्व भरतर्षभ,' कालिदासस्तोमः,' 'शाकुन्तले कालिदासस्य मनोविश्लेषणनैपुण्यम्' इत्यादयो लेखाः पठनीयाः । तत्र श्रीमताम् आचार्य-बलरामशास्त्रिणां 'कवेः शूद्रकस्य मृच्छकटिकम्,' अनन्तशास्त्रीफड्केमहोदयानां 'वादत्रयम्' पण्डितवराणां के० राजन्नशास्त्रिणां 'साहित्य-रत्नाकरस्थ-पद्यविमर्शः,' श्रीमतां रामकृष्णकाशीकराणां 'रशियन् भाषापि संस्कृतस्य सन्ततिरेव,' एवं श्री कन्हैयालालपेडामहोदयानाम् 'इक्षुः' इति शीर्षका लेखास्तु विशेषेण विवेचनात्मका अर्थ-गम्भीराश्च सन्ति । लेखैः समं त्र कविता अपि प्रकाशिताः । तासु कवितासु 'भारतगौरवगाथा' मनोहरा । 'हिमवर्षिणि प्रदोषे वनदर्शनम्' इति प्रा० गौरीप्रसाद चु० झाला महोदयेन कृतं राबर्ट फ्रॉस्ट महाभागानाम् आँग्ल-कवितायाः रूपान्तरं शोभनं विद्यते ।

'सत्सङ्गविजयनाटकम्' एवं 'पद्मिनीपरिचयम् (काव्यम्)' इति द्वयोः धारावाहिकरूपेण प्रकाशनं श्लाघ्यम् ।

**सागरिका**—इयं सागरविश्वविद्यालयस्य संस्कृत-परिषदा प्रकाशिता संस्कृत-त्रैमासिकी । वार्षिकं शुल्कम् ६·०० ।

अयं तृतीयवर्षस्य चतुर्थाङ्कः । अस्मिन्नङ्के अष्टौ लेखाः प्रकाशिताः । लेखेषु डॉ० वासुदेवविष्णुमिराशीमहोदयानां 'कालिदास-समय-निर्णयः,' डा० हरीन्द्रभूषणजैनमहाशयानां 'तिलकमञ्जरीकारो महाकविर्धनपालः' श्रीवनमालाभवालकरमहाभागानां 'महाभारत-युद्धे नारी' एवं श्री विश्वनाथ-भट्टाचार्याणां 'नाट्य-स्वरूप-विमर्शः 'इति शीर्षका लेखा विशेषेण विवेचन-पूर्णाः, संस्कृत-साहित्यानुशीलकैः विद्वद्भिः एते पठितव्याः । अधुनातन-विषयमाश्रित्य लिखितः' संस्कृत-पत्रकारिता' इति शीर्षकः श्रीमतां रामगोपाल-मिश्राणां लेखोऽपि शोधपूर्णोऽस्ति ।

**वैदिकमनोहरा**—सम्पादकः—जगदाचार्यसिंहासनाधीशः प्रतिवादि-भयङ्करः अण्णङ्कराचार्यः । कार्यालयः—एल्० काञ्चीपुरम्, मद्रासः । वार्षिकं मूल्यम्—५·०० ।

पत्रिकाया अयं महत्त्वपूर्णोऽङ्कः । अङ्केऽस्मिन् द्राविडाम्नाय ( चतुस्सहस्रव्यपदेशभाजन)-दिव्यप्रबन्धानां संस्कृत-हिन्दी-टीकायाः प्रकाशनयोजनायाः किञ्चिदंशः प्रकाशितः । टीका सरलतमा मनोहरा चास्ति । एतेषां दिव्यप्रबन्धानां परिचयं परिज्ञानं च सर्वेषां कृते सुलभं कारयितुं श्रीमतां सम्पादकमहाभागानामयं महान् प्रयत्नः श्लाघ्योऽस्ति ।

**बलि-संस्कृतम्**—सम्पादकः वैद्यरामस्वरूप शास्त्री आयुर्वेदाचार्यः । कार्यालयः—आगरारोड, घाटकोपरः बम्बई—७७ । वार्षिकमूल्यम् ६.०० ।

अयं षोडशवर्षस्य दशमोऽङ्कः । बालानां संस्कृतज्ञान-संवर्धनाय उपादेयमिदं पत्रम् । अस्मिन् नियतरूपेण प्रकाश्यमानाः 'चित्राभ्यासः,' 'कोषाभ्यासः', 'लोकोक्तयः', 'सूक्तयः', इत्यादिस्तम्भा महदुपयोग-शालिनः सन्ति । एतेषां पाठेनच्छात्रा बहूपकृता भवेयुरित्यत्र न कश्चन सन्देहः ।

**गैर्वाणी**—प्रकाशिका—संस्कृतभाषाप्रचारिणी सभा, चित्तूरः (आन्ध्रप्रदेशः)। वार्षिकमूल्यम्–४.००, प्रत्यङ्कम् ०.४०।

मासिक्या गैर्वाण्या अयं तृतीयवर्षस्यैकादशोऽङ्कः। पत्रिकायां कथाकविताभिः सह सभया संचालितानां परिचयाभिज्ञ-विचक्षण-समर्थ-कोविदादीनां परीक्षाणां परिणामः प्रकाशितः। 'सुलभपाठमाला', 'राजाजी कथा' एतौ द्वौ स्तम्भौ प्रारम्भिकच्छात्राणां कृते शिक्षाप्र.यकौ स्तः।

पत्रिकायाः सज्जा आकर्षिकाऽऽस्ति।

**भारतवाणी**—सम्पादकः—प्रा० डॉ० व० ग० राहूरकरः। प्रकाशिका संस्कृत-सभा पूणे–२। वार्षिकमूल्यम् ५.००।

इदं पुण्यपत्तनस्थायाः संस्कृतसभायाः पाक्षिकमुखपत्रमस्ति। प्रस्तुतोऽयमङ्कः पाक-भारत-सङ्घर्ष-विशेषाङ्कः। सम्पादकीयं पठनीयमस्ति। मध्यवर्तिनि पृष्ठे चित्रितेन 'रणचण्डी चा यज्ञ' इत्यनेन चित्रेण भारत-पाकसङ्घर्षस्य सुन्दरं सुस्पष्टं च सिंहावलोकनं प्रस्तुतम्।

संस्कृतभाषायाः प्रचार-प्रसार-दृष्ट्या पत्रमिदं विशेषेण महत्त्वपूर्णमस्ति।

**दिव्यज्योतिः**—सम्पादकः—कविरत्नश्रीकेशवशर्मा शास्त्री, प्रकाशकः—आनन्द लाज, जाखू, शिमला। वार्षिकं मूल्यम्–६.००।

दशमवर्षस्य प्रथमाङ्कोऽयम्। अङ्केऽस्मिन् प्रकाशितेषु लेखेषु, प्रो० देवदत्तभट्टिमहोदयस्य 'भारतीयसंस्कृत्यै दक्षिणभारतस्य योगदानम्', डॉ० हरिदत्तपालीवालस्य 'निबन्धकारस्य दायित्वं तत्र प्रश्नाश्च' इति शीर्षकौ लेखौ पठनीयौ स्तः। संस्कृतभाषायां हिन्दी-उर्दू-भाषयोः कविलेखकानां परिचयप्रकाशनं श्लाघ्यम्। 'अन्तर्दाह' इत्येकस्य हिन्दी-उपन्यासस्य संस्कृत-रूपान्तरमप्यत्र प्रकाशितं वर्तते।

मासिकपत्रमिदं सुष्ठुतरं मुद्रितम्।

**भारती**—सम्पादकः—आशुकविः कविभूषणः श्रीहरिशास्त्री, सहसम्पादकौ—दीनानाथ त्रिवेदी 'मधुपः' साहित्यालङ्कारः, गिरिराज शर्मा शास्त्री। कार्यालयः—भारती-भवनम्, जयपुरम्। वार्षिकमूल्यम्—५.००, एकप्रतेः मूल्यम्—०.५०।

इयं मासिकी पत्रिका। प्रकाशितेषु लेखेषु महाभागानां चूडा-मणिशास्त्रिणां 'किं द्विजशूद्रभेदो वैदिकः' इत्ययं लेखो विचारणीयः। तत्र श्रीधरभास्कर-वर्णेकरमहोदयानां शिवराज्योदयमहाकाव्यस्य विजययात्रा नामैकादशसर्गोऽपि प्रकाशितः। अवशिष्टासु रचनासु 'माघे सन्ति त्रयो गुणाः', 'सर यदुनाथ सरकारः', 'कबीरपद्यानुवादः' इत्यादयः सन्ति।

पत्रिकायाः मुद्रणं तु शोभनम्।

**हिमालयः**—सम्पादक :—गोपाल शास्त्री दर्शनकेशरी।

इयं श्रीबदरीनाथ-वेद-वेदाङ्गमहाविद्यालयस्य वार्षिकी पत्रिकाऽऽस्ति। तत्र तिसृषु संस्कृत-हिन्दी-आंग्ल-भाषासु रचनाः प्रकाशिताः। सर्वा रचनास्तत्र विद्यालयीयैः छात्राध्यापकैः एव लिखिताः। लेखेषु वासुदेवगौतममहोदयानां 'उत्तराखण्डः' इत्यस्मिन् लेखे उत्तरविभागे स्थितानां प्रमुखस्थलानां संक्षिप्त-परिज्ञानं दत्तमस्ति।

मुद्रणं सुष्ठुतमं, कर्गलञ्च मनोहरम्।

**मरु-भारती**, सम्पादकः—डॉ० कन्हैयालाल सहलः। प्रकाशकः—बिरला इन्स्टिट्यूट ऑफ टेक्नालाजी एण्ड साइंस, पिलानी। वार्षिकमूल्यम्—८.००, एकप्रतेः—२.५०।

इयं राजस्थानी-साहित्यसंस्कृत्योः शोधात्मिका त्रैमासिकी हिन्दी-पत्रिकाऽऽस्ति। तस्या अयं त्रयोदशवर्षस्य तृतीयोऽङ्कः। समग्रैव पत्रिका पठनीया। श्रीमतां गोविन्दअग्रवालमहोदयानां 'राजस्थानस्य जन-जीवने लोकसाहित्ये

उष्ट्रः,' ग्रियर्सनमहाभागानां 'पूर्वी राजस्थानी' इत्याख्यस्य लेखस्य डॉ० आत्मारामजाजोदियाकृतोऽनुवादः श्रीगोविन्दलालजोशीमहाशयानां 'हाड़ौतेः कृषि-उक्तयः' इति लेखत्रयं पठनीयमास्ते।

राजस्थान-साहित्य-संस्कृति-सर्वाङ्गीण-विवेचना-प्रस्तोत्री 'मरुभारती' सर्वथैव संग्रहणीया। अङ्कस्य मुद्रणं नितरां मनोहरम्।

## पश्चिमजर्मनीस्थकालोननगराकाशवाण्याः संस्कृतकार्यक्रमाः

Dear Sir,

May we draw your attention to a programme of The Voice of Germany that might interest you; it is a programme in Sanskrit, broadcasted every second week on Thursday. The first broadcast will be on the air the 3rd of February. We begin with news and a commentary in Hindi at 730 GMT. After the commentary you can hear the programme in Sanskrit. The frequencies are 11785 kc, 15 and 275 kc. 17845 kc.

The head of the Hindi Section Dr. Sushama Lohia takes care of the Sanskrit programme too.

**PUBLIC RELATIONS DEPARTMENT**

27-1-1966. DEUTSCHE WELLS

# वाराणसेयसंस्कृतविश्वविद्यालयस्य

## विद्यावारिधि (पी०एच डी०) उपाधिकृते पञ्जीकृतानुसन्धित्सूनां नामानि शोधविषयाश्च

| अनुसन्धित्सु-नामानि | विषयाः |
|---|---|
| **सन् १९६३ तमे वर्षे** | |
| १—श्रीमती लीलावती अग्रवाल | संस्कृतसाहित्यस्य महाकाव्येषु प्रकृति वर्णनम् |
| २—श्रीविन्ध्येश्वरी प्रसाद त्रिपाठी | उव्वटमहीधराचार्यकृतशुक्लयजुर्वेदमाध्यन्दिन-संहिताभाष्ययोस्तुलनात्मको विमर्शः। |
| ३—श्रीसुरेशदत्त पाण्डेयः | संस्कृतकाव्येषु चतुःषष्टिकलाः |
| ४—श्रीरामबूझ चतुर्वेदी | संस्कृतसाहित्ये विरह-वर्णनम्। |
| ५—श्रीरामगोविन्द शुक्लः | पुरुषोत्तमकृतायाः भाषावृत्तेः विवेचनम्। |
| ६—श्रीचन्द्रबली द्विवेदी | न्यास-विमर्शः। |
| **सन् १९६४ तमे वर्षे** | |
| ७—श्रीसुरेन्द्र पाण्डेयः | आगमतत्त्वानां तुलनात्मकमध्ययनम्। |

| | |
|---|---|
| ८—श्रीसरयूप्रसाद उपाध्यायः | उपनिषत्सु अद्वैत-वेदान्तः । |
| ९—श्रीबजरंगदेव द्विवेदी | भास्कराचार्य-सिद्धान्त-समीक्षा । |
| १०—श्रीगोपीनाथ टण्डनः | संस्कृतस्य प्रमुखकाव्येषु नारी-चरित-विमर्शः । |
| ११—श्रीजनार्दन गंगाधर रटाटे | श्रीमद्भास्कराप्पयदीक्षितरचिते वृत्तचन्द्रोदये । |
| १२—श्रीसीताराम शुक्लः | पाणिनीयव्याकरणे अव्ययप्रकरण-विमर्शः । |
| १३—श्रीश्रीराम पाण्डेयः | दीधितिकारोपज्ञविचाराणामालोचनम् |
| १४—श्रीरमाकान्त झाः | सूतसंहितायाः दार्शनिकविवेचनम् । |
| १५—श्रीनारायणदत्त शर्मा | पुराणेषु ज्यौतिषम् । |
| १६—श्रीकपिलदेव त्रिपाठी | पुराणेषु शक्तितत्त्वविमर्शः : |
| १७—श्रीश्यामाचरण पाण्डेयः | वैयाकरणसिद्धान्तकौमुदीमनुसृत्य तद्धितप्रकरणस्य प्रयोगाणां समीक्षणम् । |
| १८—श्रीआद्याप्रसाद शुक्लः | किरातार्जुनीयशिशुपालवधयोरलङ्कारविषये तुलनात्मकं विवेचनम् । |

सन् १९६५ तमे वर्षे

| | |
|---|---|
| १९— श्रीविजयप्रसाद त्रिपाठी | समासवृत्ति-विमर्शः । |
| २०—श्रीरामजीतप्रसाद त्रिपाठी | पाणिनीयदर्शनस्येतरदर्शनापेक्षया वैशिष्ट्यम् । |

| | |
|---|---|
| २१—श्रीजानकी प्रसाद द्विवेदी | पाणिनीयव्याकरणे शास्त्रीयसंज्ञानां तात्पर्यम् । |
| २२—श्रीरामशरणदास श्रीवैष्णवः | व्याकरणशास्त्रे वैशेषिकतत्त्वानां विमर्शः । |
| २३—श्रीटीकाराम पन्थी | पाणिनीयव्याकरणात् प्राक्तन-व्याकरणानां पर्यालोचनम् । |
| २४—श्रीब्रह्मानन्द पाण्डेयः | काश्मीर-संस्कृत-काव्येषु सामाजिकव्यवस्था । |
| २५—श्रीरामायण द्विवेदी | कालिदासकाव्येषु राजनीतिव्यवस्थानुशीलनम् । |
| २६—श्रीबलराम शास्त्री भरद्वाजः | कालिकापुराणस्य प्रामाणिकं संस्करणम् । |
| २७—श्रीरामचन्द्र मालवीयः | उदयनव्यक्तित्वनिर्णयः । |
| २८—श्रीलालविहारी शर्मा पाण्डेयः | पुराणेषु सर्गविषयकमतवादानां समन्वयः । |
| २९—श्रीसत्यनारायण मिश्रः | शुद्धाद्वैतवेदान्तरसस्वरूपम् । |
| ३०—श्रीरमेशचन्द्र शास्त्री | योगसम्प्रदायानां स्वरूपविमर्शः । |
| ३१—श्रीशिवशङ्कर शुक्लः | ज्ञानराजप्रणीतसिद्धान्तसुन्दरम् । |
| ३२—श्रीरामचन्द्र पाण्डेयः | चन्द्रगोलविमर्शः |
| ३३—श्रीविन्ध्येश्वर पाण्डेयः | भारतीयदर्शनेषु आत्मविषयकमताविमर्शः । |
| ३४—श्रीदेवेन्द्रनाथ झा | प्रत्यक्षप्रमाणविमर्शः । |

३५—श्रीदेवराज पौडेलः — द्वादशशताब्दीतः सप्तदशशताब्दीपर्यन्तानां प्रकाशितशिलालेखानां साहित्यिकविवेचनम् ।

३६—श्री कुमारी रमा मिश्रा — वैदिककालादारभ्य वैवाहिकी शास्त्रीयव्यवस्था ।

३७—श्रीविश्वनाथदेवः — ऋग्वेदीयपदपाठस्य वेदान्तरपदपाठेभ्यस्तुलना ।

३८—श्रीराधेश्याम मिश्रः — व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः ।

३९—श्रीउमाशङ्कर मिश्रः — रससिद्धान्तविमर्शः ।

४०—श्रीलक्ष्मीनारायण मिश्रः — आयुर्वेदे ज्यौतिषम् ।

---

निष्फलं यौवनं तस्य रूपञ्च विभवश्च यः ।
यो जनः प्रियसंसक्तो न क्रीडति वसन्तके ॥

—वररुचेः

# आगतपत्राणि समीक्षणानि च

आचार्य प्र० कु० मोदीमहोदयानाम्                    इन्दौरात् ।

गीर्वाणवाणीसमुन्नत्यवगामिनीं त्रैमासिकीं संगमनीं समासाद्य पवित्रमुद्देश्यमस्याः रुचिरां योजनां चावगत्य प्रमुदितमानसोऽहम् जातः । श्रेयानयम् प्रयासः । नूनमस्यां प्रकाशिताः निखिला एव लेखाः रोचकाः ज्ञानवर्द्धकाश्च । सम्यक् पठिता च मया । संस्कृतभाषायाः प्रचाराय, सुरभारतीभाप्रकाशाय, संस्कृतज्ञानराशेर्विकासायोपकारिणीयं त्रैमासिकी 'संगमनीपत्रिका' निश्चयेन कल्पताम् इति कामयते ।

चित्तूरुस्थसंस्कृतभाषाप्रचारिसभायाः
प्रधानमन्त्रिणाम्                    दि० १४-११-६५
ति० कं० तिश वेङ्कटाचार्याणाम्                    चित्तूरोः ।

भवत्प्रेषितः संगमन्याः द्वितीयोऽङ्कः अधिगतः सादरमवलोकितश्च । अनुसन्धानात्मकाः व्यासाः अतीव मोदयन्ति माम् । चमत्कारचन्द्रिका आन्ध्राणाम् अतीव मोदावहा, यतः सिंगभूपालः तदुपवर्णितो दर्शीश्वरोऽस्मदभिमानपात्रम् । अमुद्रितानां ग्रन्थानां मुद्रितेषु विषयविमर्शश्चेति संगमन्याः भूमिका संस्कृतवाङ्मयस्य उत्तेजिका अभिज्ञतोषदायिनी च भवति ।

माननीयन्यायाधीश— प्रयागात्।
*श्रीहरिश्चन्द्रपतित्रिपाठिमहोदयानाम्* दि० २०-१२-६५

प्रिय शास्त्री जी,

आपकी परिषद् द्वारा प्रकाशित संस्कृत त्रैमासिकी 'संगमनी' मिली। बड़ी प्रसन्नता हुई।

पत्रिका में प्रकाशित गद्य और पद्य दोनों की भाषा अधिकतर सरल, सहज और सरस है—इसके लिए आप बधाई के पात्र हैं।

देववाणी संस्कृत को सारे देश के शिक्षित जनों की वाणी बनाने के लिए यह आवश्यक है कि उसके सहज और सरस रूप के द्वारा ही अपने विचारों का आदान-प्रदान किया जाय।

आशा है, आप के सम्पादन में 'संगमनी' के माध्यम से संस्कृत भाषा की सुन्दर सेवा हो सकेगी।

*अर्जुन चौबे काश्यपः* १७-२-६६
प्राचार्यः डिग्री कालेज, प्रतापगढ़तः

विविधैरनुभवशीलैः सम्पादकैः सम्पादितां, गद्य-पद्य-नाटकादि-विविध-साहित्य-विधाभिः समलङ्कृतां, चित्रैः भावैश्चित्रितां समालोचनया समन्वितां संगमनीं समुपलभ्य बहुशः हृषितोऽस्मि। अस्याः प्रकाशनकालत एव प्रत्येकाङ्कं समालोक्य वक्तुमिदं शक्यते यदियं पत्रिका ज्ञान-विज्ञान-दर्शन-साहित्य-विषय-सम्बन्धितान् पूर्वग्रहेण मुक्तान् लेखान् नूतनरूपेण कमनीयकलेवरे प्रकाशयति। ग्रन्थसमीक्षां, काव्यशास्त्रविवेचनां सुभाषितश्लोकान् शोधसमालोचनाञ्च प्रकाश्य न केवलं पाठकानां मनोरञ्जनं करोति अपि तु तेषां ज्ञानवर्धनं पथप्रदर्शनञ्च विदधाति। गवेषणापूर्णान् नूतनान् विषयान् प्रकाश्य संगमनी संस्कृतभारत्याः पूर्णोन्नतिं करिष्यतीति आशासे।

नूनं संगमनी अस्माकं समाजे तथैव स्थानं महत्त्वमादरं च ग्रहीष्यति यथा राष्ट्रभाषायां कादम्बिनी-हिन्दुस्तान नवनीत - ज्ञानोदय-धर्मयुग-प्रभृति-पत्राणि प्राप्नुवन्ति।

Prof. Dr. H. Bechert.
Indologisches Seminar
der Universitat
Hainbundsr, 21
34 Gottingen, Germany (West)

Gottingen, 30/11/65

Dear Sir,

With my best thanks I acknowledge the safe receipt of the first and second number of your valuable Sanskrit Quarterly Sangamani, we are very happy, indeed, to learn from it that Sanskrit language is still a living force and not only a matter of philological research in India.

With my best wishes for further Success, I am,

Yours Sincerely
*Dr. H. Bechert*

*अस्य संस्कृतानुवादः*

प्रोफेसर डॉ० एच्० बेचर्ट
(पश्चिमजर्मनी)

३०-११-६५

प्रियमहोदय,

स्वसाधुतमधन्यवादपूर्वकमहं संगमनीनाम्न्या भवदीयश्रेष्ठत्रैमासिकपत्रिकायाः प्रथमद्वितीयाङ्कयोः प्राप्तिं स्वीकुर्वे ।

भारतवर्षे संस्कृतभाषा न केवलं भाषाविज्ञानशोधविषयमात्रमेव अपितु अधुनापि स्फुरन्ती शक्तिरितीतो ज्ञात्वा वयं नूनममन्दमानन्दं वहामः ।

अस्या अधिभविष्यत्साफल्याय शुभतमाशंसाभिः सह—अहमस्मि

भवन्निष्ठः
डॉ० एच्० बेचर्ट

*रामकिशोरमिश्रमहोदयानाम्* अलीगढ़तः

दि० ४-१२-६५ ।

पण्डितप्रवरैः प्रभातशास्त्रिभिः प्रयागतः प्रकाश्यमानां सहसा संगमनीं समासाद्य सर्वाङ्गसुन्दरीसमां समस्तसामग्री-संयुक्तामिमां समालोच्य समुल्लसतितरां मे चेतः । सुरसरस्वती-समवेता संगमनी संस्कृतसाहित्यस्य संसारे सम्यक् प्रचारं प्रसारं च प्रकुर्वती सततं संगमयतु सहृदयानां हृदयानि । प्रयागतः प्रगतिपथेन संगच्छमाना सा स्वसत्प्रयासं साफल्यं समधिगमयेदिति सन्ततं कामये ।

*के० राजन्य शास्त्रिणाम्* संस्कृतअकादमी
उस्मानिया विश्वविद्यालयतः

दि० ३-१२-६५

अधिगता 'संगमनी' । सेयं त्रैमासिकी विषयवैविध्येन विचारप्राचुर्येण भाषासौष्ठवेन भावगाम्भीर्येण मुद्रणरामणीयकेन च सफल-सचेतसां चेतांस्यावर्जयतीत्यत्र न संशयावकाशः ।

*हरिदत्तशास्त्रिणाम्* हरिद्वारात्

दि० २०-११-६५

हृद्यानवद्यसद्गद्यपद्यचारुरुचान्विता ।
प्रभातप्रतिभोत्पन्ना जीयात् 'संगमनी' चिरम् ॥

मुनि— जोधपुरात्

*धरणेन्द्रसागर 'धरण' महोदयानाम्* दि० ३१-१-६६

उपलब्धा 'संगमनी' पठिता च । सर्वथा अभिनवोऽयं प्रयत्नः । अस्यां साहित्य-दर्शने-तिहासादिविषयात्मका गुम्फिता लेखाः तत्तद्विषये ज्ञानस्य नव्यां सरणिमुन्मीलयन्ति मनांसि चाहरन्ति । इमामवलोक्य मेऽस्ति कोऽपि महान् हर्षः ।

प्रधानाचार्य —
सर्वनारायणझामहोदयानाम्

कल्लूमलसंस्कृतमहाविद्यालय·
कानपुरतः,
दि० १६-१२-६५ ।

कविकुलकृतिकमनीया विकसन्ती कमलिनीव संगमनी ।
प्रभातकरसंगमनी साऽस्तु लोकरञ्जनी सुचिरम् ॥

विद्याभूषण
पण्डित गणेशराम शर्मा

मंगलपुरा, गूजरों के मन्दिर के पास,
खाल में, घर नम्बर ७/१८५
पत्रालयः झालावाड़ (राजस्थानम्)
६, फरवरी १९६६

सम्मान्याः श्री प्रभातशास्त्रिणः साहित्याचार्याः,

संगमन्याः प्रवेशाङ्को, वर्षाङ्कः, शिशिराङ्कश्चेति त्रयोऽङ्का अत्रास्माभिरुपलब्धाः समनोयोगं प्रपठिताश्च । असौ त्रैमासिकी पत्रिका स्वाविर्भावात् संस्कृतपत्रकारिताजगति स्वप्रकाशं प्रसारयन्ती खल्वानन्दयति मनांसि पाठकानां नः । अस्याः पत्रिकाया लक्ष्यं योजना च स्वार्थनिरपेक्षं संस्कृत-भारत्याः सेवाव्रतमेवेति जानतामस्माकं हृदि श्रद्धाभावो जागर्तितराम् । 'विश्व-संस्कृतम्', 'संविद्', अमृतलतेत्यादिषु संस्कृतत्रैमासिकीषु पत्रिकास्वस्याः संगमन्या नवावतारस्तावत् कमपि शुभोदर्कं सन्देशमुपस्थापयति पुरतोऽस्माकम् । पत्रिकेयं शोधगवेषणात्मकं संस्कृतसाहित्यममुद्रितानां ग्रन्थानां प्रकाशनम्, संस्कृतवाङ्मयस्य प्रचारं प्रसारं च साधयितुं प्रयतमानास्ते, तत्, सर्वथा समुचितं सामयिकं वाञ्छनीयं प्रेरणाप्रदं किमपि शुभं कर्म । अत्र लेखकाव्यादिरचनानां चयनं, सम्पादनसरणिर्भाषाशैली, रूपरेखाकारप्रकारादिकं, शुद्धं मुद्रणं, सुस्फीतं प्रकाशनञ्चेतिसर्वं रमणीयं मनोहरं च ।

अथात्राङ्कत्रये प्रकाशितेषु लेखेषु डा० श्री रामचन्द्रभट्टाचार्यस्य 'बौधायनधर्मसूत्रस्य भाष्यविमर्शः', श्रीलक्ष्मीनारायणशुक्लमहाशयस्य 'प्राचीनभारते चौर्यशास्त्रम्', श्रीबटुकनाथखिस्तेमहोदयस्य 'कालिदासस्य सूक्तिसमीक्षा', श्रीकृष्णमणित्रिपाठिमहाभागस्य 'योगदर्शनविमर्शः', श्रीगोपालशास्त्रिदर्शनकेशरिणो महोदयस्य 'पाणिनिपद्धतौ स्त्रीसमादरः' इत्याद्या रचनाः स्वाभिरुचेरनुरोधादस्माकमानन्दाय सन्तोषाय च पर्यवस्यन् ।

यद्यपि विदितवेदितव्येष्वत्रभवत्सु भवत्सु किमपि वक्तव्यमस्माकं विशेषं नास्ति तथापि भवादृशां सम्पादकप्रवराणां कृपाभावः कृपापात्रं लेखकमिमं जनमेतन्निवेदयितुं प्रेरयति, यदुत्तरभारतं संस्कृतस्य प्रधानं केन्द्रस्थलम् पुनः प्रयागस्तु सर्वविद्यानां तीर्थराज एव । ततः क्षेत्रात्तस्मादाविर्भवन्ती सेयं पत्रिका तथाविधमपि लोकभोग्यं समसामयिकं साहित्यं सर्वजनोपयोगि प्रकाशयितुमर्हति येन बाला महिलाः सर्व-साधारणाश्चापि संस्कृतज्ञास्तद्धितैषिणो जनाः सुरभारत्याः साहित्यमाधुरीमास्वाद्य संस्कृतोत्कर्षं परिचिनुयुः ।

आशास्यते, पत्रिकैषा गच्छति काले शुभोदर्कं क्रम-विकासं साधयन्ती सर्वजनप्रियाधिकाधिकं व्यापकं सञ्चारमासादयन्ती स्वोद्देश्यपूर्तौ क्षमा सफला च सम्पत्स्यत इति ।